विसृज्य मुक्तिमूलस्थं
एकवस्त्रं सुविस्मितम्
रुद्राक्ष[1]धारिणं मां च
किं करिष्यन्ति देवताः ॥ ७१ ॥

तस्य तद्वचनं श्रुत्वा
विष्णुप्रभृतिदेवताः ।
तप्तहाटकसङ्काशं[2]
धर्मगुप्तनृपं भयात्[3] ॥ ७२ ॥

तं वीक्ष्य चान्धकाः सर्वाः[4]
भवन्ति कुरु[ऋ]त[5]प्रियाः ।
न विचार्य महायुद्धं
तस्य वैरं महात्मनः ॥ ७३ ॥

धर्मगुप्तस्य नृपतेः
वयं कुर्म इतीरिताः ।
स्तुत्वा[6] तं नृपतिं दीप्तं
महात्मानं परात्परम् ॥ ७४ ॥

---

1 रुद्राक्ष–ग
2 सङ्काश–ग
3 भनात्–ग
4 सर्वे–क
5 सुरत–
6 स्तोतुं–ग

वीरमाहेश्वरं[1] सर्वे
विश्महे गगनान्तरे ।
वीरमाहेश्वराणां च
वैरं प्राकृतदेहिनाम् ॥ ७५ ॥

अनर्थसाधकं[2] लोके
इति चाहु[3]र्मनीषिणः ।
नारदप्रमुखाः सर्वे
ऋषयो देवयोनयः ॥ ७६ ॥

शान्तं[4] भक्तिगुणोपेतं
धर्मगुप्तं नृपं प्रति ।
क्रौञ्चरन्ध्रे तपःक्षेत्रे
ध्यानं कुर्वन्ति सर्वदा[5] ॥ ७७ ॥

वीरमाहेश्वराणां च
भक्तानामुत्तमोत्तमम् ।
तं नृपं पितरः सर्वे
अग्निष्वात्तपुरस्कृताः[6] ॥ ७८ ॥

---

[1] माहेश्वराः–क
[2] साधनं–क
[3] इतिराहु–ग
[4] शान्ति–क
[5] सार्वदा–ग
[6] पुरस्कृतः –क

स्तोत्रं कुर्वन्ति सतत
वीरव्रतसमन्वितम् ।
वीरमाहेश्वराणां च
भक्तान् मन्त्रव्रतान्वितान् ॥ ७९ ॥

ये निन्दन्ति सदा क्रोधात्
अन्धकारविलं प्रति ।
प्रविशन्ति सदा लोके
इति चाहु[1]र्मनीषिणः ॥ ८० ॥

तेषां माहेश्वराणां [2]च
भक्तानांप्रीतिपूर्वकम् ।
नृणां सम्पत्करं स्तोत्रं
वेदमूर्ध्नि प्रतिष्ठितम् ॥ ८१ ॥

ये कुर्वन्ति सदा प्रीत्या
तेषां स्तोत्रशरीरिणाम् ।
तदङ्गं स्पर्शितुं लोके
मृत्युर्भीतिवशं[3] गतः ॥ ८२ ॥

---

[1] इति आहु–
इत्याहुश्च–ग ( पा)
इत्याहु–क

[2] महेश्वराणां–क

[3] मृत्युभीतिपरं–क

भवतीति सुरस्तोमाः
आहुः[1] प्राकृतवेदिनः ।
अविचार्य[2] मुनिश्रेष्ठान्
वेदमूर्ध्नि प्रतिष्ठितान् ॥ ८३ ॥

वीरमाहेश्वरान मोहात्
निन्दन्ति वसुधातले ।
एते सर्वगुणोपेताः
यान्ति प्रेतबिलं प्रति ॥ ८४ ॥

इत्याहुस्सर्वदा[3] वेदाः
तथा आगमसंहिताः ।
वेदागमानां प्राधान्यं
वीरमाहेश्वरं स्थितम् ॥ ८५ ॥

भूरुद्रं जङ्गमं[4] शान्तं
प्राणलिङ्गसमन्वितम् ।
आधारचक्रराजानं[5]
स्वेच्छाविग्रहधारिणम्[6] ॥ ८६ ॥

---

[1] सर्वे–ग प्राहुः–घ
[2] न विचार्य–क
[3] सार्वदा–ग
[4] भूरुद्रजङ्गमं–ग
[5] राजानां–क
[6] धारिणाम् क.

मुक्तिमूलं [1]तत्त्वमूलं
शीलव्रतसमन्वितम् ।
आराधितुं सदा लोके
कांक्षन्ते गणनायकाः ॥ ८७ ॥

इति चाहु[2]र्महाश्रेष्ठाः
उपमन्युपुरस्कृताः ।
ऋषयः पूर्वतत्त्वज्ञाः
शम्भुध्यानपरायणाः ॥ ८८ ॥

एतस्मिन्नन्तरे देवाः
विष्णुब्रह्मेन्द्रवायवः ।
अन्धकाः प्राकृतज्ञानाः
आगमाचारवर्जिताः ॥ ८९ ॥

धर्मगुप्तं नृपं स्तोतुं
कांक्षन्ते[3] गगनान्तरे ।
नमो वेदान्तवेद्याय
तत्त्वसाधनमूर्तये ॥ ९० ॥

नमः सोमविभूषाय
वीराचारव्रताय ते ।

---

[1] मुक्तिबीजम्—ख. ग

[2] इति आहु—

[3] कांक्षन्ति—ख. म.

प्राणलिङ्गाय रुद्राय
प्राणभूताय[1] ते नमः ॥ ९१ ॥

भक्तिसागरसोमाय
धर्मगुप्ताय ते नमः ।
एवत् स्तोत्रं सुरस्तोमाः
कुर्वन्ति[2] गगनान्तरे ॥ ९२ ॥

ब्रह्मविष्णुसुरेन्द्राणां
पूर्ववद् दृष्टयोऽभवन्[3] ।
भवन्ति कृतपुण्येन
स्तोत्रेण च महात्मनः ॥ ९३ ॥

मन्दं कुर्वन्तस्त एते[4]
विष्णुब्रह्मेन्द्रवायवः ।
नृपतेः धर्मगुप्तस्य
मातरं यमकिङ्कराः[5] ॥ ९४ ॥

---

1 हताय—ग
2 बभूवुः—म
3 पूर्ववद्दृष्टये भवान्.क. च.
पूर्ववद्दृष्टिदृष्टयः—ग
4 मुदं कुर्वन्ति ते—च
5 यमकिङ्करः—क.

तान् द्विजान् पाप[1]कर्मिष्ठान्
मेषमांसाशनव्रतान् ।
यातनादेहमध्येषु
प्रविश्य च[2] पुनः पुनः ॥ ९५ ॥

इति बाधाः[3] प्रकुर्वन्ति
किं करिष्यन्ति किङ्कराः ।
धर्मराजस्य ते सर्वे
धर्मगुप्तस्य मातरम् ॥ ९६ ॥

अग्निमध्ये प्रतिष्ठाप्य
भस्मीकुर्वन्ति तान् द्विजान् ।
अब्दकोटिसहस्राणां
दिवसेषु दुरात्मनः ॥ ९७ ॥

तान् द्विजान् रौरवं घोरं-
नरकं यान[4] विग्रहान् ।
प्रदापयन्ति[5] ते सर्वे
किङ्करा यमशासनात् ॥ ९८ ॥

---

1 साम—क. हैम. च
2 प्रदेशाय—क
प्रवेशाय .
3 ईतिबाध . इति बोधं—च
4 यान्ति—ग
5 प्रदापयन्ते—क. ख

धर्मगुप्तस्य नृपतेः
विष्णुब्रह्मेन्द्रवायवः ।
नमस्कुर्वन्ति तद्दूताः[1]
वयं कुर्मः सदा प्रिये ॥ ९९ ॥

धर्मगुप्तस्य नृपतेः
प्रख्यातं आगमान्वितम् ।
भूरुद्राणां जङ्गमानां[2]
समाजेषु जितेन्द्रियाः ॥ १०० ॥

ये पठन्ति सदा प्रीत्या[3]
सायुज्यं मम हे प्रिये !
प्राप्नुवन्ति धनं गौरि
सत्यं सत्यं वदाम्यहम् ॥ १०१ ॥

देवतानां समाजेषु
धर्मगुप्तस्य भूपतेः[4] ।
चरितं चित्रचैतन्यं[5][6]
वीराचारैकसम्भवम्[7] ॥ १०२ ॥

---

1 ते दूताः--क. ख.
2 भूरुद्रजङ्गमानां च
3 प्रेत्य--क. ख
4 भूपते--क. ख
5 चरित्रं--च
6 चित्तचैतन्यं--५
7 विकाराद्वैतसम्भवम्

मनोहरं महावीर्यं[1]
गीयन्ते[2] किन्नरस्त्रियः ।
दानवानां समूहेषु[3]
उशना[4] मन्त्रवेष्टितः ॥ १०३ ॥

धर्मगुप्तस्य नृपतेः
चरितं[5] धृतविक्रमम् ।
वर्णयामास हे कान्ते[2] !
अत्यद्भुततरं परम् ॥ १०४ ॥

यस्मिन् चरित्रे ये देवाः
प्रीतिं कुर्वन्ति सन्ततम् ।
तेषां मनोहरं ज्ञानं
वर्णितुं वसुधातले ॥ १०५ ॥

न भवन्ति महाश्रेष्ठाः
अत्रिजाबालिकश्यपाः ।
नृपतेरस्य[6] तां भक्तिं
मर्त्यलोके मनोहराम् ॥ १०६ ॥

---

1 महादेव्यं–ग
2 गायन्तीत्यत्रार्थे–'गीयन्ते' इति छन्दोऽनुरोधेन
3 समाजेषु–ळ
4 उशनो–ग.
5 चरित्रं–च.
6 मे कान्ते–क
एकान्ते–ग
7 नृपतेस्तस्य–ख

दधते जङ्गमाः सर्वे
दीक्षातन्त्वविशारदाः ।
तेषां मनोहर[1]ज्ञानं
भूरुद्राणां दिने दिने ॥ १०७ ॥

ये कांक्षन्ति सदा गौरि !
ते हि[2] ब्रह्मादिवन्दिताः ।
भूरुद्रजङ्गमान्[3] लोके
स्तुवन्ति पितरः सदा ॥ १०८ ॥

आनन्दयन्ति ये सर्वे
विश्वेदेव[4]पुरातनाः[5] ।
जन्मसंसार[6]दावाग्निं
शान्तं[7]कुर्वन्ति जङ्गमाः ॥ १०९ ॥

तेषां मनोहर[8]ज्ञानं
उपदिश्यन्ति[9] किन्नराः[10] ।

[1] मनोहरं–च
[2] एते––ग
[3] भूरुद्रान् जङ्गमान्–ख. च.
[4] विश्वेदेवाः-च
[5] पुरातनः–क. ख.
[6] संस्कार–क
[7] शान्ति–क. ख
[8] मनोहरं–च
[9] उपदिशन्ति इत्यस्य स्थाने उपदिश्यन्तीति छन्दोनुरोधेन ।
[10] उपदिश्यन्तु किन्नरान्–च

यक्षाधिपं गुणनिधिं[1]
सखायं मम हे प्रिये ! ॥ ११० ॥

सरीसृपाणां राजानं
सहस्रफण[2] वेष्टितम् ।
शेषं प्रति महाज्ञानं
भूरुद्राणां च पार्वति[3] ॥ १११ ॥

जीवः सुरेन्द्रमन्त्री च
भार्गवो भक्तिदायकः ।
उपदेशं तथा चक्रे
सर्वं लिङ्गमयं जगत् ॥ ११२ ॥

शिवाधीनं जगत्सर्वं
जङ्गमाधीन ईश्वरः[4] ।
ज्ञानं च मन्त्रमित्याहुः[5]
वेदवेदान्त[6]पारगाः ॥ ११३ ॥

संसारसागरोत्तीर्णं[4]
मन्त्रमायाविवर्जितम्[5] ।

---

1 गूढनिधिं—च
2 फणि—क. ख
3 पार्वती—ग
4 धीनशाम्भवम्—ग
5 ज्ञानं म नसीत्याहुः—ग
6 वेदाङ्ग—ग. ख
7 रोत्तीर्णाः—ख
8 मन्त्रौ मायाविवर्जितः—क. ख

भूरुद्राणां जङ्गमानां[1]
स्तोत्रं सम्पत्करं नृणाम् ॥ ११४ ॥

इत्याहुर्मम सांनिध्ये
रेणुकाद्याः सनातनाः ।
भूरुद्राणां जङ्गमानां[2]
कार्यं कल्मषनाशनम् ॥ ११५ ॥

आराधयन्ति[3] मे कान्ते !
षण्मुखप्रमुखाः[4] सुताः ।
भूरुद्राणां जङ्गमानां[5]
विष्टपेषु महात्मनाम्[6] ॥ ११६ ॥

भक्तिं कुर्वन्ति मे[7] गौरि !
त एते ब्रह्मचारिणः ।
भवन्ति कृतपुण्ये
पापराशिं पुराऽर्जितम् ॥ ११७ ॥

भस्मीकुर्वन्ति सततं
भस्मपुण्ड्रसमन्विताः ।

---

1 भूरुद्रजङ्गमानां च—ग
  भूरुद्रजङ्गमानां च
3 आराधयन्ते—ग
4 प्रभृतीः—ग
5 भूरुद्रजङ्गमानां च—ग
6 महात्मनः—क
7 हे—ग.

पिङ्गकेशजटाजूटं
प्राण[1]लिङ्गसमन्वितम् ॥ ११८ ॥

भूरुद्रं जङ्गमं[2] शान्तं
चक्राणां चक्रिणं गुरुम् ।
अमेद्यवज्रकायस्थं
साधनत्रयवेष्टितम् ॥ ११९ ॥

[3]मुमुक्षुज्ञाननिरतं
मुक्तिकान्तामनोहरम् ।
षड्दीक्षदीक्षासम्पन्नं
वेदषड्भ्रि प्रतिष्ठितम् ॥ १२० ॥

वेदान्तवेद्यं तत्त्वज्ञं
पादोदकसमन्वितम् ।
नवभक्तिसमोपेतं
वैराग्यनिलयं प्रभुम् ॥ १२१ ॥

सदानन्दं नित्यतृप्तं[4]
निष्कलङ्कं निरञ्जनम् ।
अक्षमालासमोपेतं
रुद्राक्षवलयीकृतम् ॥ १२२ ॥

---

1 जूटप्राण—ग.
2 भूरुद्रजङ्गमं—क, ग
3 मुमोक्षु—ग.
4 तृप्ति—क.

ब्रह्माण्डभाण्डनिर्भेद्यं
ब्रह्मज्ञानसमन्वितम् ।
मम पूजारतं देवं
मदनास्त्रविवर्जितम् ॥ १२३ ॥

ऋषीणामग्निकल्पानां
जडाजडविभेदनम् ।
मुक्तिमूर्तिं मुनिश्रेष्ठं
ज्ञानमूलं[1] तपोनिधिम् ॥ १२४ ॥

भस्मत्रिपुण्ड्रसञ्छन्नं
लयभैरवपीडितम् ।
कालरुद्रसमोपेतं
कल्पकोटिसमन्वितम् ॥ १२५ ॥

विडम्बिनं मन्त्रकायं
पञ्चसूतकवर्जितम् ।

पञ्चब्रह्मसमोपेतं
पञ्चरात्र[1]समन्वितम् ।
कृतकृत्यं परं श्रेष्ठं
सांख्ययोगविवर्जितम् । ॥ १२६ ॥

---

[1] ध्यानमूलं–ग

[2] पाञ्चरात्र-

षट्तर्कतार्किकं[1] तातं
लोकानां लोकवेष्टितम् ।
नादविन्दुकलातीतं
कुलगोत्रविवर्जितम् ॥ १२७ ॥

सहस्रदलमध्यस्थं
यमिनां शमदायकम् ।
नृणां परमसंस्कार-
क्रियारूपगुणान्वितम् ॥ १२८ ॥

धर्मकोशं दमोपेतं[2]
धर्मार्थफलवर्जितम् ।
कामत्यागं कलाज्ञानं
कालकूटधरं प्रभुम् ॥ १२९ ॥

पितरं देवतानां च
धातारं[3] नाकिनां शिवम् ।
ईशितारं सुरेशानां
होतारं होमपूर्वकम् ॥ १३० ॥

भक्तानामर्भकं लोके
भक्तिज्ञानसमन्वितम् ।

---

1 तर्कितं–क

2 दयोपेतं–ख

3 दातारं–क. ग

वादिनां वादनिलयं[1]
वेदाङ्गं तत्त्ववेदिनाम् ॥ १३१ ॥

दानवानां बलनिधिं
भोगिनां[2] भोग[3]दायकम् ।
मुनीनां मननध्येयं
गुरूणां गुणकल्पितम् ।
कामिनां कामविद्रावं
कवीनां कविदायकम् ॥ १३२ ॥

क्रमिणां क्रमविक्षेपं
हव्यकानां हविर्भुजम् ।
प्रसादिनां[4] प्रसादस्थं
अचिन्त्यं योगमुद्रितम् ॥ १३३॥

लोकानां लोकसन्धानं
धर्मिणां धर्मवेष्टितम् ।
प्रत्यभिज्ञाननिलयं
प्रेममोह[5]विवर्जितम् ॥ १३४ ॥

---

1 वादिनिलयम्--क

2 भोगानां-ग

3 भोगि-क

4 प्रसादीनां-क

5 प्रेमामोह-क

पावनानां[1] पवित्राङ्गं
विद्यानां विदुषं[2] किल ।
युगानां युगसन्धानं
स्थावराणां स्थिरप्रदम् ॥ १३५ ॥

खगानां गमिसन्धानं
तारकाणां प्रदीपकम्[3] ।
ज्योतिषां रुचिदातारं
प्रेतलिङ्गतिरस्कृतम् ॥ १३६ ॥

ग्रहाणां नायकं ग्राह्यं
ग्रहस्थानां[4] प्रपूजितम् ।
वीरमाहेश्वरं गौरि !
स्तोतुं चन्द्रार्धशेखरम् ॥१३७॥

नेश्महे हे प्रिये शान्ते !
वयं गुहगणान्विताः ।
तेषामङ्गानि रुद्राणां
जङ्गमानां दिनेदिने ॥ १३८ ॥

---

1 पावकानां—ग

2 विदुषमिति छन्दोऽनुरोधेन ।

3 प्रदीपिकाम्—क

4 गृहस्थानां—ग

स्तोतुं सुरेन्द्रदिक्पालाः
कांक्षन्ति गगनान्तरे ।
यानि तानि[1] सुरस्तोमाः[2]
भूरुद्राणां पुरातनाः ॥ १३९ ॥

अङ्गानि जन्मशून्यानि
नमः कुर्वन्ति नाकिनः ।
भूरुद्राणां जङ्गमानां[3]
पादमूले पवित्रके ॥ १४० ॥

आपगा यमुना सिन्धु-
शोणाभद्राः ससिन्धवः[4] ।
आवासयन्ति मे कान्ते[5]
नवभक्तिसमन्विताः ॥ १४१ ॥

सर्वलोकेषु पूज्यानां
जङ्गमानां बुधोत्तमाः ।
पादाब्जानि पवित्राणि
चतुर्वर्गप्रदानि हे ![6] ॥ १४२ ॥

---

1 कानि—ग
2 सुरस्तोम—क
3 भूरुद्रजङ्गमानां —च
4 ससिन्धुजाः—
5 एकान्ते—ग
6 प्रदानि मे—ग

हृत्पद्मपीठकोशेषु
ध्यानं[1] कुर्वन्ति सर्वदा[2] ।
उपमन्युदधीच्यत्रि-
दूर्वासतृणविन्दवः ॥ १४३ ॥

शिवदीक्षासमोपेतं
प्राणलिङ्गप्रतिष्ठितम् ।
वीरमाहेश्वरं गौरि !
नमः कुर्वन्ति सर्वदा[3] ॥ १४४ ॥

नमस्कारप्रभावेन
ऋषिमध्येषु पूजिताः ।
भवन्ति ते परं दीप्तं
सायुज्यं साक्षिवर्जितम् ॥ १४५ ॥

यान्ति यानगणोपेताः
इन्द्राग्नियम[4]सेविताः ।
सूर्येन्दुकुण्डलीकर्ण-
धारिणं चक्रनायकम् ।
वीरमाहेश्वरः विश्वः
प्रपूजयति सन्ततम् ॥ १४६ ॥

---

1 दानं—क
2 सार्वदा—ग
3 सार्वदा—ग
4 यमइन्द्राग्नि—ग

कुण्डलीकृतसर्पेन्दुं
फाले भस्मविलेपनम् ।
भूरुद्रं जङ्गमं[1] शान्तं
ध्यातुं को वा जनाधिपः ॥ १४७ ॥

न समर्थो हि मे कान्ते !
भवति ध्यानवर्जितः[2] ।
कवलीकृतभक्ताङ्गं
प्रसादसुखपूर्वकम् ॥ १४८ ॥

स्निग्धमन्त्रगुणोपेतं
जङ्गमं जगतां जनाः ।
न ध्यायन्ति मम प्रीत्या
ते यान्ति यममन्दिरम्[3] ॥ १४९ ॥

सर्वदा[4] जङ्गमं श्रेष्ठं
इत्याहुः ब्रह्मसेविताः ।
अशेषप्रमथाः कान्ते !
तृणीकृतपुरन्दराः ॥ १५० ॥

विभ्रन्ते[विभ्रते] तस्य तत्त्वं
वेदातीतं गुरूदयम् ।

---

1 भूरुद्रजङ्गम–क. ग
2 ज्ञानवर्जिताः –
3 मम मन्दिरम्–क
4 सार्वदा–ग

सद्योजातमुखाज्जातं
वामदेवमुखोद्भवम् ॥ १५१ ॥

अघोरवक्त्रसम्भूतं
तत्पुरुषमुखोद्भवम्[1] ।
आनन्दममलं शान्तं
दमं च दधते सति[2] !
तस्मात् सर्वप्रयत्नेन
दमं [3]कुर्वन्ति शाम्भवाः ॥ १५२ ॥

दमादन्यत्[4] परं तत्त्वं
नास्ति लोके वरानने !
तत्त्वानां करणाद्धेतोः[5]
कार्याणां सविकल्पकम् ॥ १५३ ॥

निर्विकल्पं गुणातीतं
ज्ञानं त्यक्त्वा महर्षयः ।
दमं[6] धर्मार्थदं लोके
दधते नात्र संशयः ॥ १५४ ॥

---

1 इदमर्धं अधिकं–ग. पुस्तके
2 सिति–ग
सते–ग (पा)
3 शार्मं–ग
4 दर्न्यं–ग
5 कारणाद्धेतोः–क. ग
6 दम–ग

दमाच्छमं शान्तिरूपं[1]
जायते मम सन्निधौ ।
तच्छमं मोक्षनिलयं
भक्तिज्ञानसमन्वितम् ॥ १५५ ॥

विडम्बयन्तं कामारिं
वीरमाहेश्वरं शिवम् ।
भूरुद्रं[2] जङ्गमं देवाः
स्तोतुं कांक्षन्ति मे प्रिये ! ॥ १५६ ॥

शमादन्यजग[3]न्मध्ये
तत्त्वं[4] तत्त्वविदो बुधाः ।
न धारयन्ति मे भक्त्या
इदं सत्यं वरानने ! ॥ १५७ ॥

शमेन जायते ज्ञानं
योगिनां तत्त्वसाधनं ।
ज्ञानधर्मोऽत आत्मानं[5]
अन्तर्व्यापिनमीश्वरम् ॥ १५८ ॥

---

1 शान्तरूपं—क
2 भूरुद्र—ग
3 दन्यजग—
4 तत्त्व—क
ज्ञानाद्धर्ममहात्मानं—ग

पश्यन्ति[1] जङ्गमाः सर्वे
प्राणलिङ्गप्रतिष्ठिताः ।
प्राणलिङ्गप्रयुक्तेन
भूरुद्रेण महात्ऽऽमना ॥ १५९ ॥

आत्मानमात्मनात्मा तु
दृश्यते सुरपूजिते ।
इडापिङ्गलयोर्मध्ये
प्राणवायून् दश प्रिये ॥ १६० ॥

निरोधयन्ति तान् वायून्
विसृज्य च पुनः पुनः ।
वसिष्ठवालखिल्याद्याः
ऋषयः मर्देहिनः[2]

अखण्डज्योतिषां नाथं
प्रणवं[3] ब्रह्मरूपिणम् ।
वीरमाहेश्वरं शान्तं
ऊर्ध्वरेतं जनाधिपम् ॥ १६२ ॥

---

1 दृश्यन्ते—ग
2 देहिकाः—ग
3 प्रणव—ग

ध्यानं चक्रुः सदा गौरि !
मम भक्तमनोरमम्[1] ।
हृत्पुण्डरीककोशेषु
प्राणलिङ्गप्रतिष्ठिताः ॥ १६३॥

वायून् चलनसंस्कारान्
उद्भूतस्पर्शसाधनान्[2] ।
अनुद्भूतप्रभावज्ञान्
आत्मसाधनसाधकान् ॥ १६४ ॥

न निरुध्य महाश्रेष्ठाः[3]
योगं दधति मे प्रिये !
अष्टाङ्गयोगराजानं[4]
षट्स्थलब्रह्मपूजितम् ॥ १६५ ॥

वीरमाहेश्वरं विद्वान्
रेणुको मुनिपुङ्गवः ।
मे गुरुः सात्त्विकः शान्तः
जितक्रोधो जितेन्द्रियः ॥ १६६ ॥

---

1 भक्त्या मनोरमे–ग
भक्तमनोरमम्–क
भक्ता मनोरमम्–ग (पा)

2 साधनात्–क

3 महिश्रेष्ठान्–क

4 राजानाम्–क
अत्र योगराजमित्यस्य स्थाने योगराजानमिति छन्दोऽनुरोधेन ।

स्तोत्रं[1] करोति मे कान्ते !
इदं सत्यं वरानने !
गोरीवल्लभ कामारे !
कालकूटहरा[2] हर ॥ १६७ ॥

रेणुकस्य यदाख्यानं
श्रोतुं कौतूहलं परम् ।
इच्छामहे[3] महाभाग !
वद मे प्राणनायक ! ॥ १६८ ॥

ब्रह्माण्डजननात्पूर्वं
अहं[4] मायाविवर्जितम् ।
रेणुकं भक्तभक्तिस्थं[5]
देशिकेन्द्रं गुरुं प्रभुम् ॥ १६९ ॥

तत्त्वमस्यादिनिरतं
शिवसूत्रसमन्वितम् ।
कथयामि पुरा कान्ते !
इतिहासं सुविस्मितम्[6] ॥ १७० ॥

---

1 स्तोतुं—ग
2 हर इत्यस्यस्थाने दीर्घः
छन्दोऽनुरोधेन
3 इच्छयामि—ग
इच्छामहे—क
4 गुहं—ग
5 भक्तिभक्तस्थं—ग
6 सुवेष्टितम्—क

चरमाद्रिपुरोभागे
अष्टप्राकारवेष्टिता ।
अगाधपरिघाखात[1]-
वलयेन विराजिता ॥ १७१ ॥

दशद्वारान्विता सौधा[2]
उपद्वारशतान्विता ।
नवलक्षमहावीथी
विधिरञ्जित[3]मालिका ॥ १७२ ॥

केतुमाला पुरी[4] गौरि !
पावकत्रयवेष्टिता ।
ब्रह्माण्डसूत्रसङ्क्लृप्त-
ज्योतिश्चक्रविराजिता ॥ १७३ ॥

ध्रुव[5]तारासमोपेत-
गोपुरेण विराजिता[6] ।
अनूरुसारथेरश्व-
खुरताडनतोरणा ॥ १७४ ॥

---

1 परिघापाद–क.ख
2 ता या सा–ग
3 वीथीरचित–ग
4 पुरे–ग
5 ध्रुवं–ग
6 विडम्बका–क

रत्नाकरस्य साहस्र--
वीचिमालोपशोभिता ।
नाकिनां निलयं नित्यं
हसतीव वरानने ! ॥ १७५ ॥

वारनारीसमोपेता
वरदानववेष्टिता ।
चन्द्रकान्तशिलाबद्ध[1]-
कोटिहर्म्यविराजिता ॥ १७६ ॥

रत्नकुट्टिमसंकीर्णा
गन्धमारुतसेविता ।
चन्द्रमालासमोपेता[2]
ध्वजकोटिसमन्विता ॥ १७७ ॥

कुजादिपञ्चभगणा[3]
भगतारासमन्विता ।
लसद्रथाश्वसङ्कीर्णा[4]
कान्ताजनसमन्विता ॥ १७८ ॥

---

[1] बद्धा—ख

[2] समोपेत—ख

[3] भगण—क

[4] सङ्कीर्ण—ग

तस्याः प्रभावसम्पन्नः
विद्वान् वीर्यसमन्वितः ।
देशिकेन्द्रो मुनिश्रेष्ठः
रेणुको मुनिपुङ्गवः ॥ १७९ ॥

आगम्य[1] मन्त्रसारेण
तोयेन च पुनः पुनः ।
पुरीं तां पावनीकृत्य
मणिभद्रनृपं गुरुम् ॥ १८० ॥

शिवदीक्षाप्रयुक्ताङ्गं
शिवसंस्कारसाधनम् ।
प्रतिष्ठाप्य द्विजान् सर्वान्
शिवदीक्षासमन्वितान्[2] ॥ १८१ ॥

वीरमाहेश्वरान् गौरि !
गणयामास रेणुकः ।
द्विजानां कोटिसंख्याकं
शिवसंस्कारवर्जितम् ॥ १८२ ॥

देशिकेन्द्रो मुनिश्रेष्ठं
चक्रे दीक्षाऽऽगमार्थकैः ।

---

[1] आ स्य–ग (पा)
[2] दीक्षागमान्विता –ग

मणिभद्रस्य नृपतेः
दारा धर्मसमन्विता ॥ १८३ ॥

अपांसुला मतिवती
दमयन्तीति विश्रुता ।
बिम्बाधरी पीनकुचा
कण्ठरागसमन्विता ॥ १८४ ॥

तां रेणुको मुनिश्रेष्ठः
दीक्षां[1] पूर्वपुरातनीम् ।
स चक्रे धुरि नारीणां
कीर्तनीयां करोति हे[2] ॥ १८५ ॥

नृपतिः मणिभद्रोऽसौ
देवदानवपूजितः[3] ।
देशिकेन्द्रममुं[4] शान्तं
रेणुकं गुरुमागतम्[5] ॥ १८६ ॥

पप्रच्छ भक्तिभावेन
लोके श्रेष्ठतपस्वि कः[6] ।

---

1 दीक्षा—क. ख
2 मे—ग
3 पूजितम्—
4 न्द्रमुनि—क
5 गुरुपुङ्गवम्—ग
6 अत्र तपस्वी कः इत्यस्य स्थाने तपस्विकः इति छन्दोऽरोधेन ।

इति तद्वचनं श्रुत्वा
मणिभद्रमहीपतेः ॥ १८७ ॥

स्मितवानात्मसम्पन्नः
रेणुको मुनिसत्तमः ।
वाचं वदति मे कान्ते !
नृणां मुक्तिप्रदाय[यि]काम् ॥ १८ ॥

दीक्षाङ्गं[1] मन्त्रसंयुक्तं
प्राणलिङ्गसमन्वितम् ।
वीरमाहेश्वरं शान्तं
पूजां कुरु महीपते ! ॥१८९ ॥

वीरमाहेश्वरादन्यत्
नास्ति तत्त्वं जगत्त्रये ।
वीरमाहेश्वराणां च
विमलाङ्गेषु भूपते ! ॥ १९० ॥

आवासयन्ति ऋषयः
कामक्रोधविवर्जिताः[2] ।
तस्मात् सर्वप्रयत्नेन
पूजां कुरु महीपते ! ॥ १९१ ॥

---

1 दीक्षाङ्ग—ग
2 क्रोधसमन्विताः—क. ख

इति तद्वचनं श्रुत्वा
नवभक्तिसमन्वितः ।
मणिभद्रो नृपश्रेष्ठः
उवाच गुरुसन्निधौ ॥ १९२ ॥

वीरमाहेश्वरं वाऽपि
केन संस्कारकेण मे ।
भक्त्या माहेश्वरं[1] देवं
पूजादानफलप्रदम् ॥ १९३ ॥

तत्सर्वं साधकोपायं
वद मे गुरुपुङ्गव !
तस्य तद्वचन श्रुत्वा
तुष्टात्मा रेणुको गुरुः ॥ १९४ ॥

नृपं प्रति दमोपेतं
वाक्यं ब्रह्मेन्द्रविस्मितम् ।
उवाच[2] मे प्रिये गौरि !
मन्त्रध्यानसमन्वितम् ॥ १९५ ॥

आत्मानन्दं[3] शिवं शान्तं
नित्यतृप्तं निरञ्जनम् ।

---

1 महेश्वरं—ग
2 पुत्र च—क
3 आत्मानन्द—क

वीरमाहेश्वरं वीर !
मामिव[1] क्षत्रियोत्तम ! ॥ १९६ ॥

अवेहि[2] तत्त्वसंकाशात्
देशिकेन्द्रप्रभावतः ।
आज्ञां चक्रे भ्रुवोर्मध्ये
हं क्षं द्विदलसंयुते ॥ १९७ ॥

वीरमाहेश्वरं शान्तं
आरुह्य वसुधाधिप !
पूजां कुरु मम प्रीत्या
शृणु कारुण्यभावतः ॥ १९८ ॥

विकारा[3]ज्जायते पुण्यं
रेफाद्धर्मः[4] प्रतिष्ठितः[5] ।
मकाराज्जायते मन्त्रः[6]
हकारादात्मसंनिभम् ॥ १९९ ॥

महातत्त्वं शिवकरं[7]
जायते वसुधातले ।

---

1 नमामि—ग
2 अवैहि—ग(पा)
3 वकारा—ग
4 धर्मं—ग
5 प्रतिष्ठितम्—ग
6 मन्त्रं—ग
7 तत्त्वमीश्वराद्धि—क.ख

अनुलोमविलोमेन
शिव इत्यक्षरद्वयम् ॥ २०० ॥

जगताऽऽवेष्टितं[1] गौरि !
शिवादन्यन्न विद्यते ।
वेदागमानां तद्वेद्यं
वेदमध्ये प्रतिष्ठितम् ॥ २०१ ॥

रुद्रसूक्तेन संयुक्तं
शिव इत्यक्षरद्वयम् ।
वेदानां याजुषं श्रेष्ठं
काण्डानां रौहिणं[2] तथा ॥ २०२ ॥

तत्रापि पञ्चमः प्रश्नः
शतरुद्रमिति[3] प्रिये !
शतरुद्रे महामन्त्रः[4]
शिव इत्यक्षरद्वयम् ॥ २०३ ॥

---

[1] जगतांवेष्टित -ग

[2] काहिणं—ग
औक्षिनं—ग (पा)
काश्चिनं—क

[3] शतरुद्र इति—क. ख

[4] महामन्त्रं-ग

वेदाश्च[1] सर्वशास्त्राणि[2]
जायन्ते जगतीतले ।
वकाराद्रागमाः सर्वे
जायन्ते मेनकात्मजे[3] ! ॥ २०४ ॥

केनचिन्मनुजेनापि
शिव इत्यक्षरद्वयम् ।
मेलनं ज्ञानभावेन
चक्रे मन्त्रात्मकः[4] शिवः[5] ॥ २०५ ॥

शिव इत्यक्षरे लोके
नास्ति तत्त्वं गुरोः परम्
वीरमाहेश्वरं मन्त्रं
जपन्ति प्रमथोत्तमाः ॥ २०६ ॥

सप्तकोटिमहामन्त्रं
चित्तविभ्रमकारणम्[6] ।
इति त्यक्त्वा महापूज्यं
भुक्तिमुक्तिप्रदायकम् ॥ २०७ ॥

---

1 शकारात्–ग
2 सर्ववेदाश्च–क. ख
वसुधातले–ग
4 मन्त्रात्मकं–ग
5 शिवम्–ग
6 विभ्रमकारकम्–ग(पा)

षडक्षरसमोपेतं
वीरमाहेश्वरं विभुम् ।
अङ्गन्यासैः करन्यासैः
तं मन्त्रं[1] कीलकान्वितम् ॥ २०८ ॥

अर्गळेन समोपेतं
बीजन्याससमन्वितम् ।
पठन्ति[2] प्रमथाः सर्वे
इति सत्यं महीपते ! ॥ २०९ ॥

सर्वमन्त्रान्[3] परित्यज्य
तं मन्त्रं[4] मुक्तिदायकम् ।
नृणां सम्पत्करं श्रेष्ठं
पवित्रमघनाशनम् ॥ २१० ॥

पठस्व [त्वं] परमप्रीत्या
वीरमाहेश्वरं शिवम् ।
आदिमध्यावसानेषु
प्रणवं मेलनीकृतम् ॥ २११ ॥

---

1 तन्मन्त्र–ग
2 पठन्ते–ग
3 सर्वधर्मान्–ग
सर्वान् मन्त्रान्–ख
4 तन्मन्त्रं–

दलबीजसमोपेतं
 तं मन्त्रं[1] नाकिनः सदा ।
कांक्षन्ति सर्वदा[2] स्वर्गे
 विष्णुतुल्यपराक्रमाः[3] ॥ २१२ ॥

वीरमाहेश्वरो मन्त्रः
 गन्धर्वैः सुरसत्तमैः[4] ।
गीयते[5] सर्वदा[6] प्रीत्या
 इत्याहुः षण्मुखादयः ॥ २१३ ॥

वेदादौ वेदमध्ये च
 वेदान्ते च प्रतिष्ठितम् ।
ऋग्यजुस्सामसङ्घेषु[7]
 प्रणवं[8] न्यासपूर्वकम् । ॥ २१४ ॥

सनत्कुमारो विद्वान् [द्वांस्तु]
 गानतानसमन्वितः[9] ।

---

1 तन्मन्त्रे—ग
2 सर्वथा—ख
3 पराक्रम—क
4 स्वरसत्तमैः
5 गीयन्ते—क, ख
6 सार्वदा—ग
7 संख्येषु—क
8 प्रणामं—ग
9 समन्वितम्—कः ख

जपते[1] सर्वदा[2] गौरि !
प्रत्यर्थिजयकांक्षया[3] ॥ २१५ ॥

जाग्रे स्वप्ने सुषुप्तौ च
तं मन्त्रं[4] मन्त्रनायकम् ।
बीजन्याससमोपेतं
शक्तिकीलकसंस्तुतम् ॥ २१६ ॥

विधातृप्रमुखाः सर्वे
श्रद्धाभक्तिसमन्विताः[5] ।
उपदेश्यन्ति[6] [दिशन्ति] ये चान्ये
ऋषयो ब्रह्मपूजिताः ॥
तेन मन्त्रप्रभावेण
सृष्टिं कुर्वन्ति सन्ततम् ॥ २१७ ॥

अखण्डमद्वैतमचिन्त्यवैभवं
बुधोत्तमाः सर्व[7]पुराणपूजिताः ।
मन्त्राक्षर[8]न्यासमहात्म्यं शिवं
ते वीरमाहेश्वरमन्त्रनायकम् ॥ २१८ ॥

---

1 जप्यते–ग
2 सार्वदा–ग
3 कांक्षितः–ग
4 तन्मन्त्र–ग
5 समन्वितः–क
6 उपदेश्यन्ति–ग
7 सार्व–ग
8 मन्त्राक्षरं ग

भुक्तिप्रदं मुक्तिपथं प्रविश्य
ते दैवताः[1] सन्ततकामचारिणः ।
अन्यानि शास्त्राणि तिरस्कृतानि
त्यक्त्वाऽऽशुमन्त्रं
सुरवल्लभासुतम्[2] ॥ २१९ ॥

महीपते ! मन्त्रगुणान्वितं शिवं
माहेश्वरं[3] मोक्षपथैक[4]गामिनम् ।
गुरूत्तमं वेदशिखामणिं प्रभुं
भूपावनं पिङ्गजटावभासम् ॥ २२० ॥

आद्यन्तशून्यं[5]पुरुषं पुरातनं
शीलान्वितं तत्त्वनिधिं सदाशिवम् ।
यं जङ्गमं[6] ज्ञानमयं सनातनं
ध्यानं कुरु प्रीतिकलान्विते[7] शिवे ॥ २२१ ॥

इति श्रीवीरागमोत्तरभागस्य वीरमाहेश्वरतंत्रस्य
वीरमाहेश्वरस्वरूपमन्त्रानुवर्णनं नाम
द्वितीयः पटलः समाप्तः[9]

---

1 देवताः—ग

2 सुरवल्लभाः सुधाम्—ग

3 महेश्वरं—ग

4 पदैक—ग

5 आद्यान्त—क

6 भावयन् जङ्गमं—ग

7 कथा॰
वीरागमे—ग

9 इति श्रीवीरागमोत्तरभाग—द्वादशसहस्रग्रन्थ-वीरमाहेश्वरतन्त्रस्य (कर्नाटकटीकायां)वीरमाहेश्वरस्वरूपमन्त्रानुवर्णनं नाम द्वितीय पटलः—क. ग

## अथ तृतीयः पटलः

—o—

ईश्वर उवाच—

मणिभद्रो गुरुं शान्तं
रेणुकं मुनिपुङ्गवम् ।
पप्रच्छ तत्क्रियारूपं
अहं वेद्मि मम प्रिये ! ॥ १ ॥

शम्भोर्महात्मनस्तस्य
वाक्यं[1] वेदागमान्वितम् ।
श्रुत्वा सा कामिनी गौरी
मुदं धत्ते गुणान्विता ॥ २ ॥

व्योमकेशः शिवः शम्भुः[2]
तां प्रियां प्राणवल्लभाम् ।
आलिङ्ग्य[3] चुम्बनं कृत्वा
इदं वचनमब्रवीत् ॥ ३ ॥

वीरमाहेश्वराणां च
दीक्षां शृणु वरानने !

---

1 वचनं—ग
2 शम्भोः—क
3 आलिङ्ग—क

सवितर्यप्युत्तरं[1] मार्गं
गते सति महात्मनः[2] ॥ ४ ॥

वीरमाहेश्वराणां च
दीक्षां मुक्तिप्रदातरम् [यिनीम्] ।
कांक्षन्ति ज्ञानभावेन
शुभलग्नतिथौ प्रिये ! ॥ ५ ॥

दीक्षाकलादि

चन्द्रताराबलोपेतं
पञ्चेष्टिकसमन्वितम् ।
निष्पञ्चकं महालग्नं[3]
गुरुदृष्टिसमन्वितम् ॥ ६ ॥

केन्द्रत्रिकोणयामित्र[4] [जामित्र]
पापग्रहविवर्जितम् ।
स्थानान्युपचयान्याहुः[5]
भूपुत्रेण समन्वितम्[6] ॥ ७ ॥

षड्वर्गशुद्धिं तं लग्नं
शोधयेद्देशिकः प्रिये !

---

1 सवित्र उत्तरं–ग   सवितर्यप्यत्र–क
2 अत्र महात्मानः इत्यस्य स्थाने महात्मनः इति छन्दोऽनुरोधेन ।
3 निष्पञ्चकमहालग्न–क
4 त्रिकोणगामित्र–क
5 न्याशु–ग
6 समन्वितः–क

इन्द्ररुद्रभगस्वाति-
पूषज्येष्ठाग्नियान्यपि[1] ॥ ८ ॥

ऋक्षाण्यपि परित्यज्य
दस्राहिर्मध्यतारकाः ।
यमं विष्णुं गुरुं वारि
पितृपूर्वात्रयं[2] तथा ॥ ९ ॥

उत्तरात्रयऋक्षाणि
शोधयेत् तन्त्र[3]पारगः ।
चरलग्नं परित्यज्य
स्थिरलग्नं विशोधयेत् ॥ १० ॥

गुरु[1]काव्यबुधश्चन्द्र[2]
दृष्टियुक्तं शुभात्मकम् ।[3]
दोषस्वल्पं[4] गुणाधिक्यं
तं लग्नं शोधयेत् सुधीः ॥ ११ ॥

---

[1] अत्र अाग्नेयान्यपि इत्यस्य स्थाने आग्नियान्यपि इति छन्दोनुरोधेन ।

[2] पूर्वाश्रयं-क· ख

[3] तत्र—क

[4] गुरोः—क

[5] बुधचन्द्र इत्यस्य स्थाने बुधश्चन्द्रेति छन्दोऽनुरोधेन ।

[6] शुभात्मकः—क

[7] दोषं स्वल्पं—क

एकपादं द्विपादं वा
त्रिपादं वा गुहान्वितम्[1] ।
पाददृष्टिबली सौरिः
द्विपादो बलवान् गुरुः ॥ १२ ॥

त्रिपादो बलवान् भौमः
सम्पूर्णाः[2] सकलग्रहाः ।
बलाबलं विचार्याशु
ग्रहचेष्टाविवर्जितम् ॥ १३ ॥

नैसर्गिकं[3] बलोपेतं
चेष्टाकालबलान्वितम् ।
रिष्फं चन्द्राष्टमं लग्नं
त्यजेत् तत्त्वार्थपारगः ॥ १४ ॥

सम्पत्तारासमोपेतं
गुरुकेन्द्रसमन्वितम् ।
शुक्रस्थ चन्द्रदशमं
तं लग्नं शोधयेत् सुधीः ॥ १५ ॥

ग्रहैश्चन्द्रगुरुभौमैः[4]
अमूर्यैर्भगणान्वितम् ।

---

1 गृहान्वितम्–ख₂
2 सम्पूर्णे–ग
3 नैसर्गिक–ग
4 अत्र गुरुभौमैरिति वक्तव्ये गुरुभौमैरिति छन्दोनुरोधेन

त्रिंयं कमण्डलं[1] त्यक्त्वा
कण्टकं ग्रहरक्षकम् ॥ ॥ १६ ॥

त्रिंयं कमण्डलं होरा
पन्था राहुश्च कण्टकम् ।
ललाटपरिघा दण्डं
परित्यज्य शुभान्वितम् । ॥ १७ ॥

अखण्डं[2] चन्द्रदशमं
भद्राविष्टिविवर्जितम् ।
तद्दिनं तत्त्वसम्पन्नः
देशिकेन्द्रो विशोधयेत्[3] ॥ १८ ॥

क्षेमतारासमोपेतं
गुरुकाव्यादिनाऽन्वितम् ।
अश्विनी हरते पापं
यमो ज्ञानविनाशनम् [नः] ॥ १९ ॥

अग्निं क्रोधं [अग्नेःक्रोधः] भवेदाशु
रोहिणी ज्ञानसाधनम् ।
करोति, सोमनक्षत्रं [त्रात्]
क्रियाभक्तिः[4] प्रजायते ॥ २० ॥

---

1 कमडलं–
2 अखण्ड–ग
3 विबोधयेत्–क
4 क्रियाभक्ति–क

रौद्रर्क्षे[1] मम सायुज्यं
प्रदापयति हे प्रिये ।
अदितिस्तत्त्वसन्धानं
ज्ञानं चक्रे [2]वरानने ॥ २१ ॥

तिष्यर्क्षं [क्षात्] गुरोर्भक्तिः
जायते जगतीतले ।
सर्पर्क्ष [क्षात्] तामसज्ञानं
जायते हे प्रिये शिवे[3] ! ॥ २२ ॥

पित्रर्क्षे आयुषः क्षीणं
करोतीति महात्मनः ।
अशेषप्रमथाः सर्वे
आहुस्तत्त्वार्थपारगाः ॥ २३ ॥

फल्गुनी [न्यां][4] भक्तिवैराग्यं
नश्यतीति तथा प्रिये ।
उत्तरादुत्तरज्ञानं[5]
जायते वसुधातले ॥ २४ ॥

भगर्क्षमिन्द्रियज्ञानं
प्रदापयति सन्ततम् ।

---

1 आर्द्रक्षे–ग.
2 अत्र करोतीत्यर्थे चक्रे इति छन्दोऽनुरोधेन ।
3 पद्यमिदं क पुस्तके न दृश्यते
4 फाल्गुणे–ग
5 उत्तरा उत्तरज्ञानं–क

चित्रा चैतन्यवैकारं
प्रदापयति हे प्रिये ॥ २५ ॥

वायुयोगक्षयकरं
ज्ञानं जन्मान्तरान्वितम् ।
चक्रं,[1] इन्द्राग्निनक्ष[त्रात्] त्रं
लिङ्गद्रोहं[हः] प्रजायते ॥ २६ ॥

मैत्रं [त्रात्] माहेश्वरज्ञानं
जायते इन्द्रनामकम् ।
तद्दक्षं मम भक्तिं च
प्रदापयति सर्वदा[2] ॥ २७ ॥

मूला[त्] मनोहरं ज्ञानं[3]
जायते सलिलं [लात्] तथा ।
उत्तराषाढतो ज्ञानं
नश्यतीति तपस्विनः ॥ २८ ॥

आहुः सर्वगुणोपेताः
आगमार्थविशारदाः ।
वैष्णवं विष्णुभक्तिं च
शिवसंस्कारवर्जितम्[4] ॥ २९ ॥

---

[1] अत्र चक्रे इति छन्दोऽनुरोधेन,

[2] सार्वदा–ग

[3] मूलं मनोहरज्ञानं–ग

[4] वर्जितः–क. ख. ग (पा).

प्रदापयति हे गौरि !
वसुतारातपःक्षयम् ।
तज्ज्ञानं जायतेऽप्याशु[1]
शततारा भिषक्प्रदा ॥ ३० ॥

पूर्वाभाद्रा[त्] शिवाद्वैत-
ज्ञानं नश्यति हे प्रिये ।
उत्तराभाद्रनक्षत्रं
षट्स्थलब्रह्मसाधनम् ॥ ३१ ॥

तज्ज्ञानं जायते[2]ऽप्याशु
रेवती मुक्तिदायकम् ।
षट्शाम्भवमयं[3] ज्ञानं
प्रदापयति सर्वदा[4] ॥ ३२ ॥

अर्को व्याधिं करोत्याशु
सोमवारो [रात्] निरंजनम्
शिवसस्कारसंयुक्तं
नित्यज्ञानं प्रजायते ॥ ३३ ॥

---

[1] जायते ह्याशु–ग
अत्र जनयतीत्यर्थं जायते इति छन्दोऽनुरोधेन ।

[2] अत्र जनयतीत्यस्य स्थाने
जायते इति छन्दोऽनुरोधेन ।

[3] षष्ठ्यां भवमयं–ग

[4] सार्वदा–ग

भौमवारः पापर्रां
प्राणिहिंसापरः सदा ।
जायते[1] सौम्यवारोऽपि
सौम्यज्ञानं प्रजायते ॥ ३४ ॥

वीरमाहेश्वराणां च
भुक्तिमुक्तिप्रदायिकाम्[2] ।
करोति गुरुवारोऽपि
भृगुवारोऽपि हे प्रिये! ॥ ३५ ॥

मलिनं मन्दवारोऽपि
आणवं तत्त्ववर्जितम् ।
तज्ज्ञानं दापयत्याशु
वाराणां वेष्टितं फलम् ॥ ३६ ॥

शृणु गौरि ! मम प्रीत्या
श्रद्धाभक्तिसमन्विते ।
प्रतिपत्पापसंयुक्तं
ज्ञानं दापयति प्रिये ! ॥ ३७ ॥

द्वितीया द्वैतसन्धान
आत्मज्ञानं निरञ्जनम् ।
प्रदापयति मे कान्ते !
तृतीया तृप्तिदायकम् ॥ ३८ ॥

---

1 अत्राप्येवंछन्दोऽनुरोधेन । जनयतीति यावत् ।

2 प्रदायकम्-ख

अन्नकोशं तत्त्ववर्जं
विकासयति सर्वदा[1] ।
चतुर्थी प्राणकोशस्थं
वायुमुद्धारयेत् सदा ॥३९॥

पञ्चमी पञ्चकोशस्थं
पञ्चतत्त्वसमन्वितम् ।
अहङ्कारं करोत्याशु
षष्ठी षट्चक्रभेदनम् ॥४०॥

आत्मज्ञान तत्त्ववेद्यं
जायते[2] वसुधातले ।
सप्तमी सप्तसंस्कारं[3]
वैष्णवद्रवसाधनम् ॥४१॥

ज्ञानं सदा करोत्याशु
अष्टमीमदवेष्टितम् ।
प्राणापानसमायुक्तं
मनोज्ञानं प्रजायते[3] ॥४२॥

---

[1] सार्वदा—ग

[2] जनयतीत्यस्य स्थाने जायते इति छन्दोनुरोधेन ।

[3] संस्कारा—ग

[4] जनयतीति यावत् ॥

नवमीप्राणलिङ्गस्य
पटल गोलकान्वितम् ।
जायते[1] जगतां मध्ये
दशमी तत्त्वसाधनम् ॥ ४३ ॥

करोत्येकादशी कान्ते !
एकज्ञानं निरन्तरम् ।
प्रदापयति हे गौरि !
द्वादशी ध्वान्तसाधनम् ॥ ४४ ॥

तिमिरं जायते[2]ऽप्याशु
तथा लोके वरानने !
त्रयोदशी महामायां
निद्रां दापयति प्रिये ॥ ४५ ॥

चतुर्दशी भक्तिमूलं
शिवज्ञानं प्रजायते[3] ।
राकामन्त्राक्षरन्यास
राजानं रामणीयकम्[4] ॥ ४६ ॥

वेदमूर्ध्निगतं मन्त्रं
विकासयति हे प्रिये !

---

[1] जनयतीति यावत् ॥

[2] जनयतीति यावत् ।

[3] जनयतीति यावत् ।

[4] रमणीयकम्—क. ख

सिनीवली महामायां
बोधयेदाशु मे प्रिये ! ॥ ४७ ॥

कुहूः तुच्छित[2]संयुक्ता[3]
बुद्धिं दापयति[4] प्रिये ।
तपः क्षयकरंज्ञानं
अमावास्यां प्रजायते ॥ ४८ ॥

विष्कम्भं[म्भा] वीर्यवृद्धित्वं [श्च]
जायते वसुधातले ।
प्रीतिर्माहेश्वराणां च
प्रीतिं दापयति प्रिये ॥ ४९ ॥

आयुष्मान् मानशतकं[5]
आयुर्दापयति प्रिये !
सौभाग्य शो[ग्याच्छो]भनं चाशु
ब्रह्मज्ञानं प्रजायते ॥ ५० ॥

अतिगण्डं[ण्डो] महाव्याधिं
प्रदापयति सर्वदा[6] ।

---

1 मे सति–क. ख.ग(पा)
2 कुच्छित–क
कुजेन–ख
कुच्छेन–ग
3 संयुक्तां–ग
4 दापयते–क
5 शततां--क
6 सार्वदा - ग

सुकर्मज्ञा[मा]नवैराग्यं
नवभक्तिसमन्वितम् ॥ ५१ ॥

प्रदापयति हे गौरि !
धृति[ते]र्धृतिकरं शुभम्
जायते जगतां मध्ये
शूलो[ला]रोगं[1] [गः] प्रजायते ॥ ५२ ॥

गण्डो[ण्डात्] गण्डान्तरज्ञानं
तत्त्वनाशं[शः] प्रजायते ।
वृद्धिर्वीर्यं प्रकुरुते[2]
ध्रुवं[वात्] सत्यं प्रतिष्ठितम् ॥ ५३ ॥

प्रदापयति हे गौरि !
व्याघातो[3] व्याधिसम्भवम् ।
हननं जायते लोके
हर्षणं[णात्]आत्मसंभवम् ॥ ५४ ॥

मनोज्ञानं नित्यतृप्तिं
प्रदापयति सन्ततम् ।
वज्रं[:] मनोभवं तत्त्वं
दीक्षाकाले प्रजायते ॥ ५५ ॥

---

[1] रागं–क

[2] वीर्य च कुरुते–क
वीर्यं प्रजायन्ते–ग

[3] व्याहतः –
व्यागतः–ख

सिद्धि[द्धेः] तत्त्वयुतं सर्वं[1]
जीवब्रह्मात्मशोधनम् ।
प्राणलिङ्गप्रतिष्ठानं
प्राणबीजसमन्वितम् ॥ ५६ ॥

भूरुद्राणां जङ्गमानां[2]
तत्त्वं मोक्ष[3]प्रदायकम् ।
जायते जगतां मध्ये
जन्मसम्पत्तिकारणम् ॥ ५७ ॥

व्यतिपातो व्याधिरूपं
काय[4]कल्मषदायकम् ।
वीर्यनाशं च यत्तत्त्वं
प्रदापयति सन्ततम् ॥ ५८ ॥

वरीयानात्मसन्धानं
यत्तत्त्वं तत्त्वनायकम् ।
प्रदापयति मे कान्ते !
प्राणलिङ्गसमन्वितम् ॥ ५९ ॥

परिघः[घात्] पावनज्ञानं[5]
तत्त्वं माहेश्वरान्वितम् ।

---

1 सिद्धिः सर्वं तत्त्वयुतम्-क
2 भूरुद्रजङ्गमानां च-ग
3 तत्त्वमोक्ष-क
4 कामकल्मष-क. ग
5 पवनज्ञानम्-ग

वीरमाहेश्वराणां च
वीर्यवृद्धिः प्रजायते ॥ ६० ॥

शिवः शिववतां बुद्धिं
मायातीतां मनोरमाम् ।
प्रचक्रे तत्त्वनिलयं
सिद्धो मायाविवर्जिताम्[1] ॥ ६१ ॥

यत्तत्त्वं प्रददात्यार्ये[3]
साध्यं कालसमन्वितम् ।
कल्पान्तरमनोज्ञानं
कल्पकोटिसमन्वितम् ॥ ६२ ॥

रुद्राणि[3] जगतां मध्ये
सुकर्म मम साधनम् ।
आत्मतत्त्वं लिङ्गयुतं
ददाति[4] प्रमथान्वितम् ॥ ६३ ॥

तद्योगं योगविदुषां
शुभज्ञानं वरानने !
शुकः[क्रः] शुचिमतां[5] बुद्धिं
तत्त्वसम्पत्तिवेष्टिताम् ॥ ६४ ॥

---

1 सिद्धमायाविवर्ज्जितः—ग
2 यत्तत्त्वसाध्यदात्सर्वे—ग.क
3 दीयन्ते—ग
5 दीयते—ग
4 सुखः सुखितां—

तेषां माहेश्वराणां[1] च
दधते[2] [दधाते] दिव्यदेहिनाम् ।
ब्रह्म ब्रह्मवतां बुद्धिं
ब्रह्मतत्त्वार्थसाधनम्[3] ॥ ६५ ॥

वीर्यवृद्धिं विदां लोके
वीरमाहेश्वरे परे[4] ।
महामायां मनोरूपाम्
मदनास्त्रसमन्विताम् ॥ ६६ ॥

कोपभीतिसमायुक्तां
क्रोधदम्भसमन्विताम् ।
पुत्रदारद्रव्ययुतां
ददाति हि[5] मतिं [मम[ प्रिये ॥ ६७ ॥

ऐन्द्रं[न्द्रात्[6]] मायाविनिर्मुक्तं
तत्तत्त्वं तत्त्वपारगम् ।
प्राणापानसमायुक्तं
जीवज्ञानं प्रजायते ॥ ६८ ॥

---

1 महेश्वराणां–क

2 दीयते–ग.

3 साधनाम्–ग

4 माहेश्वरे परैः –ग

5 दधाति हि–ग (पा)
दीयते तां–ग

6 ऐन्द्रो

वैधृतिर्धृतिनाशं च
यत्कर्म[1] फलदायकम् ।
तत्तत्त्वं तत्त्वविदुषां
जङ्गमानां मनोहरम् ॥ ६९ ॥

प्रदापयति हे गौरि !
योगानां योगसाधकम् ।
फलं त्वं शृणु मत्प्रीत्या
मम सायुज्यदायकम् ॥ ७० ॥

मेषलग्ने महाव्याधिः
जायते योगिनां प्रिये !
वृषभे योगिनां योगः
भवेत् तत्त्वार्थसाधनम् ॥ ७१ ॥

वीरमाहेश्वराणां च
विलासं लयवर्जितम् ।
मिथुने तत्त्वसम्पत्तिः
सर्वशीलसमन्विता ॥ ७२ ॥

कलातीता[2] कामहता
मायातीता मनोरमा ।

---

[1] सत्कर्म-च
[2] कलात्मिका-क. ख. ग
काळात्मिका-च

या सा मनोहरा विद्या
जायते प्राणलिङ्गिनाम् ॥ ७३ ॥

कर्कटके कान्तियुता
आत्मपुष्टिप्रसाधिता[1] ।
या क्रियासारसम्पत्तिः
योगिनां विदुषां प्रिये ॥ ७४ ॥

भूरुद्राणां जङ्गमानां[2]
लोके तत्त्वबलान्विता ।
जायते इति यत् तत्त्वं
ध्रुवं भवति शाम्भवि[3] ! ॥ ७५ ॥

सिंहलग्ने स्वरमयं
त्विला[4] पिङ्गल[5]वेष्टितम् ।
पञ्चाक्षरसमायुक्तं
पञ्चब्रह्मसमन्वितम् ॥ ७६ ॥

यत्तत्त्वं वेदवेदाङ्ग
पारगाणां महीतले ।
सत्यानन्दमनोबुद्धि
प्राणलिङ्गधृतां परम् ॥ ७७ ॥

---

1 प्रसादितः—क
2 भूरुद्रजङ्गमानां च—ग
3 भवति हे प्रिये —ग
4 इला—ग
5 अत्र 'पिङ्गला, शब्दस्थाने पिङ्गल इति ह्रस्वप्रयोगः छन्दोऽनुरोधेन ।

जायते सिंहलग्नेऽपि
तत्त्वशोधनदीपितम् ।
विज्ञानं विमलं शान्तं
ब्रह्मविद्यासमन्वितम्[1] ॥ ७८ ॥

तन्मन्त्रं मन्त्रविदुषां
जायते वसुधातले ।
कन्यायां कामसम्पत्तिः
मदनास्त्रसमन्विता[2] ॥ ७९ ॥

या मतिस्तत्त्वविदुषां
जङ्गमानां दिनेदिने ।
सा भवत्या[3]शु मे कान्ते
शृणु कारुण्यभावतः ॥ ८० ॥

तुलायां तु[4] महादीप्ता[5]
वीर्यवृद्धिमनोरमा[6] ।
पूर्णा परात्परा विद्या
वीरमाहेश्वरान्विता[7] । ॥ ८१ ॥

---

1 समन्विताम्–क.
2 या सा भवति–ग
3 पद्यमिदं क ख पुस्तकयोः 'या मतिः' इतिपद्यानन्तरं दृश्यते ॥
4 च–च
ततो भूज्जायते दीप्तां–ग
6 बुद्धिमनोहराम्–ग
7 पूर्णां परात्परां· विद्यां वीरमहेश्वरान्विताम्–ग. च

षट्शाम्भवमयी नित्या
षडध्व[1]सहिता शिवा[2] ।
वीरमाहेश्वराणां तु
सम्भवेत् सर्वदा प्रिये[3] ॥ ८२ ॥

वृश्चिके [कः] तत्त्वकोशस्थं
आधारनिलयं विभुम्[4] ।
प्रदापयति हे गौरि
प्राणलिङ्गसमुद्भवम् ॥ ८३ ॥

यत्तत्त्वं यततां[5] लोके
इत्याहुर्मुनिपुङ्गवाः ।
धनुर्लग्ने महाव्याधिः
जायते प्राणलिङ्गिनाम् ॥ ८४ ॥

तस्मात् सर्वप्रयत्नेन
धनुर्लग्नं परित्यजेत् ।
मकरे मन्त्रविदुषां
या दीक्षा चित्तवेष्टिता[6] ॥ ८५ ॥

---

[1] षडध्वा—क· ख· ग.
[2] षट्शाम्भवमयां दीप्त षडध्वसहितां शिवाम्—ग च
[3] वीरमाहेश्वराः यँ ग्राहयन्ति सदा प्रिये—ग
[4] प्रभुम्—च
[5] यतिनां—ग
[6] या दीक्षान्वितवेष्टिता—च

आगमाचारसंयुक्ता
भवति ब्रह्मवादिनाम् ।
भूरुद्राणां जङ्गमानां[1]
भुवनेषु कदाचन ॥ ८६ ॥

घटे दीक्षान्विते लग्ने
वीरमाहेश्वराः शुभाः ।
दीक्षां दधति मे कान्ते !
इत्याहुः प्रमथाधिपाः ॥ ८७ ॥

मीनलग्ने तत्त्वनाशं
हरते या महेश्वरी[2] ।
सा दीक्षा यतिराजानां
जङ्गमानां जगत्प्रिये ॥ ८८ ॥

बवे[3] बान्धवताबुद्धिम्
दीक्षां दधति योगिनः ।
बालवा [वं] बलभद्रस्थं
क्रियाज्ञानं प्रदापयत् ॥ ८९ ॥

---

[1] भूरुद्रजङ्गमानां च-ग

[2] महेश्वराः-क, ख
महेश्वरः-च

[3] भवे-क. ख. ग

यतीनां तत्त्वविदुषां[1]
वेदावास[2] शरीरिणाम् ।
षट्स्थलब्राह्मिणां[3] कान्ते !
कौलवं कामनाशनम् ॥ ९० ॥

इत्याहुः दीक्ष[4]सम्पन्नाः
प्रमथाः ब्रह्मसेविताः ।
किंस्तुघ्नं भक्तिवैराग्यं
सम्पत्तिं च प्रदास्यति ॥ ९१ ॥

भद्रविष्टेर्भद्र[6]गुणं
तथा तैतुलमूहते ।[7]
गरजा [जं] वणजा [णिजं] लोके
वणिक्कर्म प्रदापयेत् ॥ ९२ ॥

शकुनिः शाम्भवं तत्त्वं
दास्यते[8] योगवादिनाम् ।

---

[1] यतिराज्ञां तत्त्वविदां—ग
[2] वेदवास—क. ख
[4] ब्रह्मणां—ग
[5] अत्र दीक्षा इत्यस्य स्थाने दीक्ष इति ह्रस्वपाठः छन्दोऽनुरोधेन ।
प्रदीयते—ग
[6] विष्टिर्भद्र—च
तैतुलदीयते—ग
तैतिलईयते—च
[8] दीयते—ग

चतुष्पाद्धर्ममोक्षत्वं
वहतीति महेश्वराः ॥ ९३ ॥

आहुर्मम समीपे ते
मन्त्रगोप्याः [1]मनोगमाः[2] ।
नागवं [नागोवै] नरराजानां
प्रकृतिज्ञानसाधनम् ॥ ९४ ॥

मिथ्यातत्त्वं मोहयुत
धर्मज्ञानविवर्जितम् ।
अविद्याशवलं स्वप्ने
वहतीति वरानने ॥ ९५ ॥

एकादशयतीनां च
करणान्यानि के जनाः ।
प्रशोधयन्ति सततं
करणज्ञानसाधनाः ॥ ९६ ॥

भवानि ![3]कृतपुण्येन
प्राप्नुवन्ति ममात्मनि[4] ।
सायुज्यं साम्यरहितं
चिदानन्दैकसाधनम् ॥ ९७ ॥

---

1 मन्त्रगोप्ताः—ग
2 मनोरमाः—ग
3 भवन्ति-ग
4 महात्मनि—च

गुरुसौम्यौ[1] सुरश्रेष्ठा-
वस्तं यातौ सदा[2] [यदा] प्रिये !
तत्कालं मूढमित्याहुः
प्रमथाः तत्त्वपारगाः ॥ ९८ ॥

मूढकालं परित्यज्य
दीक्षाकालं विचारयेत् ।
गुरावस्तं गते मासः[3]
मलमित्यभिधीयते ॥ ९९ ॥

सौम्ये चास्तं गते गौरि
अस्तकालमिति [ल इति] स्मृतः ।
अस्तकालं परित्यज्य
दीक्षाकालं विशोधयेत् ॥ १०० ॥

भूपुत्रे नाशनं प्राप्ते
तदस्तमिति विश्रुताः ।
अशेषप्रमथाः सर्वे
ब्रह्मानन्दैकसाधनाः ॥ १०१ ॥

शनैश्चरे सूर्ययुते
अस्तं याते मम प्रिये ।

---

[1] गुरुसौम्यैः-ग

[2] यथा-क. ख

[3] मासे-ग

तत्कालं पापसंयुक्तं
नृणां कर्मविनाशनम् ॥ १०२ ॥

तत्कालं दीक्षनाशं[1] च
इत्याहुस्तत्त्वपारगाः ।
सूर्ये मेषं गते गौरि
दीक्षाकालं महोदयम् । ॥ १०३ ॥

अत्यभ्युन्नततरं नृणां
तत्तत्त्वार्थप्रदीपनम् ।
इति मत्वा गुरुश्रेष्ठः
दीक्षां तत्त्वार्थसाधनाम्[2] ॥ १०४ ॥

यः करोति गुरुश्रेष्ठः
ध्रुवं तत्त्वबुधां[3] बुधः ।
दिवाकरे मीनयुते
चैत्रं[4] याति महेश्वरि ![5] ॥ १०५ ॥

देशिकेन्द्रोऽसुर [ऽमर] श्रेष्ठः[6]
ज्योतिश्शास्त्रविशारदः ।

---

1 अत्र दीक्षनाशमिति छन्दोऽनुरोधेन,
दीक्षानाशमिति यावत् ।

2 साधनम्–क. ख

3 तत्त्वबुधो–ग

4 ज़ैत्रं–ग यद्गता–च

5 महेश्वरः–ग

6 महाश्रेष्ठः–क

तं मासं[1] मलमित्याशु
त्यजेत् तत्त्वार्थपारगः ॥ १०६ ॥

प्रभाकरे घटयुते
स कालो वीर्यदायकः ।
वीरमाहेश्वराणां च
प्रसादब्रह्मिणां[2] प्रिये ! ॥ १०७ ॥

सूर्ये मकरराशिं च
ग्रहराज्ञि गते सति ।
स कालोऽमलमन्त्रार्थ-
विमलज्ञाननाशनः[3] ॥ १०८ ॥

भवति प्राणलिङ्गी सः[4]
रेणुको मुनिपुङ्गवः ।
इत्याह भगवान् गौरि !
सर्वशास्त्रार्थकोविदः ॥ १०९ ॥

सूर्ये चापं गते चन्द्रे
मेषलग्नं गते सति ।
तल्लग्नं मलमित्याहुः
आगमार्थप्रशोधनाः ॥ ११० ॥

---

1 तन्मांसं–ग
2 प्रसादब्रह्मणां–ग
3 नाशकः–ख
4 प्राणलिङ्गेषु–ग. च

वीरमाहेश्वराः सर्वे
रेणुकाद्याः सनातनाः ।
वृश्चिकं ग्रहराजे मे[1]
प्रिये प्रीतिप्रदायिके[2] ! ॥ १११ ॥

गते नृणां महाकर्म
दीक्षां मन्त्रार्थशोधनाम्[3] ।
यः करोति ध्रुवं गौरि !
प्रेतराजविलं प्रति ॥ ११२ ॥

शिष्यैः सह व्रजत्याशु
इदं सत्यं वरानने ।
तुलालग्नं गते सूर्ये
प्रसादप्राणलिङ्गिनाम् ॥ ११३ ॥

यः करोति महादीक्षां
यमलोकं[4] व्रजेत् ध्रुवम् ।
कन्यां सूर्ये गते देवि !
देवदेवप्रचोदितः ॥ ११४ ॥

सकालः कालराजोऽसौ
भुक्तिमुक्तिप्रदायकः ।

---

1 ग्रहराजेषु–च
2 प्रिये प्रियाप्रदायते–च
3 दीक्षामन्त्रार्थशोधनम्–च
4 यमलोके–च

भवेत्तत्त्वार्थसम्पन्नाः
तत्त्वसाधनमूर्तयः ॥ ११५ ॥

इत्याहुः कामिनी[1] गौरि !
पितृपक्षं परित्यजेत् ।
पितृपक्षं परित्यज्य
दीक्षां कुर्वन्ति योगिनः ॥ ११६ ॥

वीरमाहेश्वराः सर्वे
प्रसादप्राणलिङ्गिनः ।
शिष्याणां भक्तियुक्तानां
तथा स्त्रीणां वरानने ॥ ११७ ॥

ग्रहराशि [जे] ग्रहश्रेष्ठे
सिंहलग्नं गते सति ।
सकलः शम्भुसंयुक्तः
शम्भुदीक्षासमन्वितः ॥ ११८ ॥

नृणां तत्त्वविदां गौरि !
भुक्तिमुक्तिप्रदायकः[2] ।

---

1 अत्र कामिनी इति छन्दोनुरोधेन ।
कामिनि—च

2 इदमर्धं—ग. पुस्तके न दृश्यते

भवति ब्रह्मतत्त्वार्थ-
शोधनाः तत्त्वपारगाः ।
अशेषप्रमथाः सर्वे
प्राणलिङ्गप्रसादिनः ॥ ११९ ॥

इत्याहुः सततं लोके
कृष्णपक्षं परित्यजेत् ।
कृष्णपक्षं परित्यज्य
शुक्लपक्षं विशोधयेत् ॥१२० ॥

कुलीरं तु गते गौरि[1] !
सुरराज्ञि ग्रहाधिपे ।
मासं[2] मलमित्याहुः
मलत्रयविवर्जिताः ॥ १२१ ॥

वीरमाहेश्वराः सर्वे
ब्रह्मानन्दैकसाधनाः ।
युग्मं[3] सूय गते देवि !
तेषां लग्नं विनाशनम् ॥ १२२॥

भक्तानां तत्त्वसम्पन्नाः
रेणुकाद्याः सनातनाः ।

---

1 याति हे गौरि ! –ग

2 तन्मासं–ग.

3 युग्मे–ग

इत्याहुः सर्वदा[1] लोके[2]
प्रसादप्राणसाधनाः[3] ॥ १२३ ॥

वृषभं भूसुते याते[4]
युग्मं सूर्यं गते सति ।
कुलीरं भार्गवे याते[5]
तन्मध्यं ग्रहकर्तरिः ॥ १२४ ॥

इत्याहुः तत्त्वनिपुणाः
हेरम्बप्रमुखादयः[6] ।
वीरमाहेश्वराः सर्वे
दीक्षातत्त्वार्थसाधकाः ॥ १२५ ॥

तां कर्तरिं परित्यज्य
दीक्षांकुर्वन्ति योगिनः ।
वृषभं भूसुते याते
कुलीरं ग्रहवर्जितम् ॥ १२६ ॥

वागचस्पतेते गौरि
तन्मध्यं ग्रहमण्डलम् ।

---

1 सार्वदा–ग
2 गौरि–ग लोके–च
3 प्रसादस्तत्वसाधनाः–ग
4 याति–ग
5 याति–ग
6 हेरम्बषण्मुखादयः–क. ख

इत्याहुः तत्त्वनिपुणाः
 रेणुकाद्याः सनातनाः ॥ १२७ ॥

तन्मण्डलं महाश्रेष्ठं
 इति ज्ञात्वा बुधोत्तमाः ।
देशिकेन्द्राः तत्त्वनिधिं[1]
 शिष्यं[2] प्रति वरानने ॥ १२८ ॥

ये कारयन्ति तां दीक्षां
 ते कुर्वन्ति सुरार्चिताः[3] ।
मेषं शुक्रे गते[4] गौरि
 युग्मं भूमिसुते गते ॥ १२९ ॥

तयोर्मध्यं विपत्कारि
 यमदंष्ट्रमिति प्रिये !
वदन्ति शाम्भवाः सर्वे
 विष्णुब्रह्मादि[5]सेविताः ॥ १३० ॥

तद्दंष्ट्रं[6] कर्मनाशं च
 ज्ञात्वा दीक्षां गुरूत्तमः ।

---

1 तत्त्वनिधीन्–च
2 शिष्यान्–च
3 नरार्ज्जिताः–ख
4 शुक्रयुते–क
5 ब्रह्मेन्द्र–क
6 तां दंष्ट्रां–च

यः करोति ध्रुवं गौरि
स सायुज्यं लभेन्मम[1] ॥ १३१ ॥

झषराशिं[2] गुरौ याते
कन्यायां भार्गवे स्थिते[3] ।
तयोर्मध्यं कर्मयोग
इत्याहुः प्रमथोत्तमाः ॥ १३२ ॥

मत्वा तत्कर्मयोगं च
शिष्यान् प्रति वरानने ।
ये कृपातत्त्व[4]राजानं
मन्त्रबीजसमन्वितम् ॥ १३३ ॥

पञ्चवर्णात्मकं मन्त्रं
पञ्चब्रह्मसमन्वितम् ।
वेदागमसमायुक्तं
तन्मन्त्रं मोक्षदायकम् ॥ १३४ ॥

प्राप्नुवन्ति गुरोर्गौरि !
शान्तास्तत्त्वविदो बुधात् ।
त एते मम सायुज्यं
भुक्तिमुक्तिप्रदायकम् ॥ १३५ ॥

---

[1] सायुज्यं लभ्यते प्रिये–क. ख

[2] वृषराशिं–ग. च

[3] भार्गववेष्टिते–च

[4] पात्तत्त्व–क. च

निरीह[3] शाश्वतं ब्रह्म[1]
ज्ञानसाधनकारणम् ।
प्राप्नुवन्ति ध्रुवं गौरि !
रुद्रकन्यासमन्विताः[2] ॥ १३६ ॥

कर्कटं भास्करे याते
मीनं चन्द्रे गते सति ।
घटं भौमे गते तेषां
तन्मध्यं स्फोटकं भवेत् ॥ १३७ ॥

स्फोटकं[3] द्विविधं ज्ञेयं
चन्द्रस्फोटं च पार्वति !
कुजस्फोटं सूर्यमध्यं
इत्याहुः तत्त्वपारगाः ॥ १३८ ॥

कुजस्फोटं परित्यज्य
दीक्षां कुर्वन्ति शाम्भवाः ।
चन्द्रस्फोटं परित्यज्य
मृत्युदं तत्त्वनाशनम् ॥ १३९ ॥

नृणां विपत्करं गौरि !
महाभीतिप्रदायकम् ।

---

1 शाश्वतब्रह्म–ग
2 समन्वितम्–च
3 स्फोटं तु–ग. च

ज्ञाननाशं क्रोधजनं[1]
कामशास्त्रप्रदीपकम्[2] ॥ १४० ॥

यत्तत्तेषां[3] त्यजन्त्याशु
भक्तानां[4] योगिनस्तथा ।
स्फोटमध्यं विचार्यैते[5]
दीक्षां कुर्वन्ति शाम्भवाः ॥ १४१ ॥

ते यान्ति मम सायुज्यं
ध्रुवं ब्रह्मेन्द्रसेविताः ।
गुरौ मेषं गते भौमेऽ
वग्रहो ग्रहवक्रगे (युग्मके)[6] ॥ १४२ ॥

पापग्रहान्विते[7] युग्मं
याते[8] ब्रह्मेन्द्रसेविते ।
तयोर्मध्यं पापयुतं
पापयोगमिति[9] स्मृताः[10] ॥ १४३ ॥

---

[1] क्रोधजननं–ग
[2] प्रदीपितम्–ग (पा)
[3] एतत्तेषां–च
[4] योगिनो–
[5] विचार्यन्ते–च
[6] ग्रहयुद्धके–ग. च
[7] प्रापग्रहेऽन्विते–च
[8] याति–ग. च
[9] हनयोगमिति–क. च
[10] स्मृतः–च

वीरमाहेश्वराः सर्वे
वीरव्रतपरायणाः ।
पापयोगं[1] परित्यज्य
कारयेत् तत्त्वपारगः ॥ १४४ ॥

भक्तानां भक्तियुक्तानां
दीक्षां देहि शुचिप्रदाम् ।
स याति मम सायुज्यं
इदं सत्यं वरानने ॥ १४५ ॥

चापलग्नं गते भौमे
घटं याति[2] दिनाधिपे ।
तन्मध्यं वज्रयोगं च
सर्वशास्त्रार्थकोविदाः ॥ १४६ ॥

वीरमाहेश्वराः सर्वे
प्रसादब्रह्मसाधनाः ।
आहुः सर्वगुणोपेताः
हेरम्ब[3]स्कन्दपूजिताः ॥ १४७ ॥

भूरुद्राः जङ्गमाः[4] शान्ताः
वेदमूर्ध्नि प्रतिष्ठिताः ।

---

[1] हनयोगं–क. ख
[2] याने–ग
[3] गुणोपेतहेरम्ब–क    गणोपेताः हेरम्ब–च
[4] भूरुद्रजङ्गमाः–ग

पुराणमोहतत्त्वार्थ-
त्याजमानाः[1] जितेन्द्रियाः ॥ १४८ ॥

वज्रयोगं[2] परित्यज्य
प्राणलिङ्गप्रतिष्ठितम् ।
तां दीक्षां कारयन्त्याशु
देशिकेन्द्राः विवेकिनः[3] ॥ १४९ ॥

भक्तानां तत्त्वविदुषां
ब्रह्मानन्दैकवेष्टिताम् ।
मीनलग्नं गते सौम्ये
मेषराशिं गते गुरौ ॥ १५० ॥

शुभग्रहान्विते गौरि !
दृष्टियुक्ते ग्रहाधिपे ।
ये कुर्वं [illegible] सुरश्रेष्ठान्[4]
शिष्यान् प्रति वरानने ॥ १५१ ॥

वीरमाहेश्वरीं दीक्षां
पवित्रां पापनाशिनीम्[5] ।

---

[1] त्यजमान—ग

[2] वज्र योगं—ग

[3] कारयेदाशु देशिकेन्द्रो जितेन्द्रियः ॥ च.

[4] सुरश्रेष्ठाः—क

पापनाशनाम्—क. ख

तस्मिन् काले बुधश्रेष्ठाः
गुरवस्तत्त्वसाधनाम्[1] ॥ १५२ ॥

शैवपञ्चाक्षरीं गौरि !
मन्त्राणां मातरं शिवाम् ।
उपदिश्यन्ति[2] मे प्रीत्या
ते यान्ति मम सन्निधिम् ॥ १५३ ॥

कुलीरं सूर्यपुत्रे च
गते तस्मिन् दिनाधिपे ।
[3]तल्लग्नं दीक्षरहितं
इत्याहुः त्रिशिरादयः ॥ १५४ ॥

वीरमाहेश्वराः सर्वे
शीलव्रतसमन्विताः ।
तुलालग्नं गते सौम्ये
भार्गवेण समन्वितम् ॥ १५५ ॥

पूर्णचन्द्रसमायुक्तं
पापग्रहविवर्जितम् ।
शुभहोरात्मकं शुद्धं
विषनाडीविवर्जितम् ॥ १५६ ॥

---

1 साधनम्–क

2 उपदिशन्तीत्यस्य स्थाने उपदिश्यन्तीति छन्दोऽनुरोधेन ।

3 तल्लग्नमित्यारभ्य शीलसमन्विताः इत्यन्तो भागः –क, ख, पुस्तकयोः न दृश्यते ॥

तल्लग्नं दीक्षविदुषोः
शिष्यान् प्रति वरानने !
गुरवस्तत्र योगीन्द्राः
तृणीकृतपुरन्दराः ॥ १५७ ॥

ये कुर्वन्ति सदा प्रीत्या
वैराग्यज्ञानसाधिकाम् ।
तां दीक्षां रचयन्त्याशु
ते भक्ताः मम मन्दिरम् ॥ १५८ ॥

प्रवेशयन्ति सततं
प्राणलिङ्गप्रतिष्ठिताः ।
रुद्रकन्यासमायुक्ताः
विष्णुब्रह्मेन्द्रसेविताः ॥ १५९ ॥

वीरभद्रविरूपाक्ष
हेरम्बस्कन्दवेष्टिताः[1] ।
विधुन्तुदे मीनलग्नं
गते सति दिवाकरे ॥ १६० ॥

कन्यालग्नं परं केतौ
याते कालवुधोत्तमाः ।
माहेश्वरीं महादीक्षां
हरन्तीत्याहुरागमाः[2] ॥ १६१ ॥

---

1 सेविताः–ग

2 त्याहुयोगिनः–ग

तं कालं तत्त्वनिपुणाः
परित्यज्य शुभान्वितम् ।
तं कालं शोधयन्त्याशु
कालवादशिरःकृताः[1] ॥ १६२ ॥

केतौ मीनं गते चन्द्रे
कन्याराशिं बुधान्विते ।
सैंहिकेये गते गौरि !
दीक्षां तत्त्वार्थसाधनाम् ॥ १६३ ॥

न कुर्वन्तीति भूरुद्राः
रेणुकाद्याः सनातनाः ।
इति ज्ञात्वा महादीक्षां
कारयेद्यममन्दिरम्[2] ॥ १६४ ॥

प्रवेशयति योऽसौ मे
कान्ते ! सत्यं वरानने !
भार्गवे स्थिरलग्नानि
गते सति महात्मनः ॥ १६५ ॥

शिष्यान् प्रति सुरश्रेष्ठाः
दीक्षां मन्त्रार्थसाधनाम्[1] ।

---

1 तिरस्कृताः—ग. च

2 कारये मम मन्दिरम्—क

3 साधनाः—ग

ये कुर्वन्ति मम प्रीत्या
ते यान्ति मम मन्दिरम् ॥ १६६ ॥

चरलग्नानि यान्याशु
पापग्रहसमन्विते ।
गुरौ लग्नानि तान्येव
गते सति महात्मनः ॥ १६७ ॥

वीरमाहेश्वराः शिष्यान्
प्रति तत्त्वप्रदायकाः ।
तस्मिन् काले महादीक्षां
शैवसिद्धान्तसाध[धि]काम् ॥ १६८ ॥

ज्ञानदृष्टियुतां यां तु
कारयन्ति मम प्रिये ।
ते यान्ति मम सायुज्यं
सुरगन्धर्वसेविताः ॥ १६९ ॥

संक्रान्तिहीनं यन्मासं[1]
मलमित्याहुरागमाः ।
मलमासं परित्यज्य
दीक्षां कुर्वन्ति शाम्भवाः ॥ १७० ॥

---

[1] मासं च-क

ज्येष्ठाश्विश्रावणाषाढे
वैशाखे प्रोष्ठपादिषु[1] ।
दारुभोगशिलाभोग
दारुभोगंशिलान्विताम्[2] ॥ १७१ ॥

तं मासं मलमित्याहुः
अब्दसिद्धान्त[3]पारगाः ।
वीरमाहेश्वराः सर्वे
कालवादतिरस्कृताः ॥ १७२ ॥

संक्रान्तिद्वयसंयुक्तं
क्षयमासमिति प्रिये ।
कार्तिकादित्रयं प्राप्तं
इत्याहुस्तत्त्वपारगाः ॥ १७३ ॥

तदब्दमध्ये हे गौरि !
मलमासद्वयं परम् ।
क्षयाब्दमिति सर्वज्ञाः
रेणुकाद्याः सनातनाः ॥ १७४ ॥

क्षयमासं क्षयाब्दं च
त्याज्यमाहुर्जितेन्द्रियाः[4] ।

---

[1] अत्र प्रोष्ठपदादिषु इत्यस्य स्थाने प्रोष्ठपादिषु इति छन्दोंऽनुरोधेन ।
[2] शिलान्वितमिति शीलान्वितमित्यस्य स्थाने छन्दोऽनुरोधेनोक्तम् ।
[3] अष्टसिद्धान्त–ग (पा)
[4] त्याज्यमासं जितेन्द्रियाः –क; ग (पा)
त्याज्यमासं परित्यज्य–ग

देशिकेन्द्रः तत्त्वनिधिः
कारयेत्तां परात्पराम् ॥ १७५ ॥

दीक्षां माहेश्वरीं लोके
ज्ञानसाधनदायिकाम् ।
मुक्तिसोपान[1]खचितां
मुमुक्षुज्ञानसाधनीम् ॥ १७६ ॥

क्षयमासे महादीक्षां
यः करोति सदा प्रिये !
स याति दैन्धवं [2] घोरं
रौरवं नरकं व्रजेत् ॥ १७७ ॥

तस्मात् सर्वप्रयत्नेन
क्षयमासं त्यजेत् सुधीः ।
तस्य मासस्य तत्पूर्वं[3]
तदग्रे मासपञ्चकम् ॥ १७८ ॥

परित्यज्य महादीक्षां
कारयेत् तत्त्वपारगः ।
तन्मासं योगिनां गौरि !
तपःक्षयकरं परम् ॥ १७९ ॥

---

1 मुक्तेः सोपान–ग.
2 दैन्दवं–च
3 मासस्यमात्सर्वं–ग
तस्य वै सप्तमासास्तु–च

नृणां विपत्करं लोके
भूपतीनां महद्भयम्[1] ।
द्विजानां पितृकर्माधि
हरतीति द्विजाधमाः ॥ १८० ॥

कश्यपात्रिभरद्वाजाः
ऋषयो[2] ब्रह्मवर्जिताः[3] ।
पुष्यमासे क्षयं याते
पुष्यर्क्षं त्य[त्या] नयेत्[4] सुधीः ॥ १८१ ॥

मार्गशीर्षे क्षयं लोके
दधते[5] तद्भयात्मकम्[6] ।
नक्षत्रं त्य[त्या]नयेत्याशु[7]
वेदवेदाङ्ग[8]पारगः ॥ १८२ ॥

देशिकेन्द्रो गुरुश्रेष्ठः
विद्वान् योगविदां वरः ।

---

1 महाद्भुतम्—क. ख
2 भरद्वाजऋषयो—ग
3 ब्रह्मवादिनः—च
4 त्यजेत्—ग (पा)
5 दधति—क
ददति—ग
6 तं क्षयात्मकम्—ग
7 त्यजन्त्याशु—च
8 वेदान्त—ग

कार्तिक्यां तु क्षयं लोके[1]
गतौ[2] सत्यां मम प्रिये ॥ १८३ ॥

अग्निऋक्षं परित्यज्य
विद्वान् धर्मार्थकोविदः ।
देशिकेन्द्रः तत्त्वनिधिः
दीक्षाकालं विशोधयेत् ॥ १८४ ॥

मलमासान्वितान्यग्नि-
ऋक्षाणि ऋषिपूजिते ।
परित्यज्य महादीक्षां
कारयेत् तत्त्वपारगः ॥ १८५ ॥

क्षयमासयुते लग्ने
त्यजेत् तत्त्वार्थशोधकः ।
अन्यानि शुभलग्नानि
शुभदृष्टियुतानि च ॥ १८६ ॥

पञ्चेष्वेकयुतान्याशु
[पञ्चांशकयुतान्याशु]
निष्पञ्चकयुतान्युमे[3] ।

---

1 कार्तिक्यां दीक्षयन् लोके—ग

2 गतायां इत्यस्य स्थाने गतौ इति छन्दोऽनुरोधेन ।

3 निष्प्रपञ्चमयानि मे—क
पञ्चाष्टकयुतान्याशुनियुष्प्रपञ्चमयान्युमे—च

भक्त्या दीक्षां गुरुश्रेष्ठः
जीवप्राणात्मसाधनाम्[1] ॥ १८७ ॥

अविद्यारहितां कान्ते !
कारयेन्मन्त्रतन्त्रतः[2] ।
स्फुटद्विभवपातं तु[3]
परित्यज्य शुभान्वितम् ॥ १८८ ॥

तद्दिनं योगसल्लापं
वीरमाहेश्वरप्रियम् ।
परित्यज्य गुरुर्गौरि !
दीक्षां प्राकृतवर्तिनीम्[4] ॥ १८९ ॥

शिवसूत्रान्वितां[5] कल्पां
वीरागमससन्वितम् ।
यः करोति ध्रुवं गौरि !
मम सायुज्यमाप्नुयात् ॥ १९० ॥

यस्मिन् दिने यदापातं
तद्दिनं परिवर्जयेत् ।

---

1 शोधनाम्–क
2 न्मन्त्रयलितः–क
3 पाते ते–ग
पाते तु–ग(पा)
स्फुटं द्विपातेतं–च
4 वर्जिताम्–ग
5 सूत्रान्वित–च

तद्दिनं[1] दुर्दिनं[2] मन्ये
शिवसंस्कारवर्जितम् ॥ १९१ ॥

वीरमाहेश्वराणां च
पूजाहीनं दिनं[3] प्रिये !
[4]तद्दिनं दुर्दिनं मन्ये
इदं सत्यं वरानने ! ॥ १९२ ॥

भूरुद्रजङ्गमानां च
पूजाहीननरं प्रिये !
तं नरं दुर्नरं मन्ये
इदं सत्यं वरानने ! ॥ १९३ ॥

भूरुद्राणां जङ्गमानां[5]
सेवाहीनं[6] जनाधिपम् ।
तं नृपं दुर्नृपं मन्ये
ध्रुवं कान्ते वरानने ! ॥ १९४ ॥

---

1 त जनं–क. ख
2 दुर्जनं–क. ख
3 हीनदिनं–ग(पा)
4 तद्दिनमित्यारभ्य–नरं प्रिये इत्यन्तो भागः–क. ख पुस्तकयोः न दृश्यते ॥
त जनं दुर्जनं–च
5 भूरुद्रजङ्गमानां च–ग. ज
6 हीनं–ग–च
7 कान्ताजनोत्तमे–ख ग

भूरुद्रजङ्गमानां च[1]
निन्दितं यं द्विजाधिपम्[2] ।
चतुर्वेदधरं लोके
दुर्जनं[3] दुष्टमानसम् ॥ १९५ ॥

अहं मन्ये ध्रुवं गौरि !
त्वमिदं शृणु सर्वदा[4] ।
वीरमाहेश्वराणां च
पूजितं पुल्कसं नरम् ॥ १९६ ॥

मन्ये द्विजाधिपं गौरि !
शृणु भक्तिसमन्वितम्[5] ।
स्फुटपातान्विते ऽशुद्धे
दिने दीक्षां प्रयच्छति ॥ १९७ ॥

तस्य कर्मविनिर्मुक्तं
निष्फलं जायते प्रिये !
पातहीने दिने शुद्धे
दीक्षाकर्मपवित्रदम्[6] ॥ १९८ ॥

---

1 वीरमाहेश्वराणां च–क. ख. च
2 यद्द्विजाधिपम्–क. निन्दति यो द्विजः–च
3 दुर्द्विजं–ग
4 इदं शृणु वरानने–ग
5 समन्विते–ग
7 पवित्रजम्–ग

मन्त्रसंस्कारभावेन
मन्त्रलक्षितयोगिनः[1] ।
पातमध्ये महाघोरं
पातान्ते पापवर्धनम्[2] ॥ १९९ ॥

पातादौ निर्दयत्वं च
जायते मम सन्निधौ[3] ।
तस्मात् सर्वप्रयत्नेन
पातं द्विभवसाधनम्[4] ॥ २०० ॥

कर्मत्यागं विषयुतं
मिथ्यामोहसमन्वितम् ।
परित्यज्य महाश्रेष्ठां
दीक्षां सर्वार्थसाध[धि]काम् ॥ २०१ ॥

देशिकेन्द्रो भक्तियुतान्[5]
शिष्यान् प्रति सदा प्रिये[6] ।
प्रदापयति तां विद्यां
रौरवं नरकं व्रजेत् ॥ २०२ ॥

---

[1] योगिनाम्—क. ख

[2] पातवर्धनम्—क. च

[3] च मिथ्यामोहसमन्वितम्—च

पातां द्विभावसाधनाम्—ग

[5] भक्तियुतो—च

[6] सदागृहीत्—क सदा व्रजेत्—च

षडशीतियुतेऽपुण्ये[1]
वासरे वसुधातले ।
भूरुद्राणां जङ्गमानां[2]
दीक्षां नेच्छन्ति मानवाः ॥ २०३ ॥

रौरवं नरकं घोरं
व्रजन्ति वसतिं वसोः ।
मेषायनं परित्यज्य
मेषमांसप्रिया द्विजाः ॥ २०४ ॥

यां दीक्षां भक्तिभावेन
नेच्छन्ति वसुधातले ।
ते यान्ति रौरवं घोरं
तप्तलाक्षा[3]समन्वितम् ॥ २०५ ॥

तुलायनं परित्यज्य
दीक्षां मोक्षप्रदा[यि]यकाम्।
वीरमाहेश्वराणां च
विमलब्रह्मसाध[धि] काम् ॥ २०६ ॥

मुक्तिकान्ताङ्गसंयुक्तां
मूर्तिमन्तां परात्पराम् ।

---

1 युते पुण्ये–च

2 भूरुद्रजङ्गमानां च–च

3 तप्तालक्षा–ग

नेच्छन्ति मानवाः प्रेत्य[1]
ते यान्ति यमसन्दिरम् ॥ २०७ ॥

वेदार्थवेष्टितां वेधां
जङ्गमानां च हे प्रिये !
इच्छन्ति देवताः सर्वाः
दीक्षां पापविनाशिनीम्[2] ॥ २०८ ॥

दीक्षाहीनान् जनान् गौरि !
प्रेतराजो यमालये ।
शिक्षितु सर्वदा[3] (लोकान्) तांस्तान्[4]
विप्रान् दीक्षाविवर्जितान् ॥ २०९ ॥

उद्योगयति धर्मात्मा
धर्माधर्मविचारणात् ।
सिंहासनं परित्यज्य
योगिनां योगसाधनाः ॥ २१० ॥

वीरमाहेश्वराणां च
दीक्षां पापहरां शिवाम् ।

---

1 प्रीत्या–च

2 विनाशनीम्–ख

3 सर्वदा–ग

4 लोकान्–[illegible]

नेच्छन्ति सर्वदा[1] लोके
विष्णुब्रह्मादिदेवताम्[2] ॥ २११ ॥

यागदीक्षां[3] परीच्छन्ति[4]
स्वर्गभोगफलान्विताम् ।
सोमपानच्छागमांस-
सेवनाग्निसुखान्विताम्[5] ॥ २१२ ॥

सवनत्रयसंयुक्तां
कुत्सितां[6] कुलगौरवीम्[7] ।
क्षुद्रदेवेच्छितां[प्सितां][8] पूजां
नेच्छन्ति वसुधातले ॥ २१३ ॥

वीरमाहेश्वराः सर्वे
नित्यानन्दैकमूर्तयः ।
ललाटे मन्त्रनिलये
आज्ञाचक्र[9]समन्विते ॥ २१४ ॥

---

1 सार्वदा—ग
2 देवताः—ग. च सेविताः—क. ग. (पा)
3 युगदीक्षां—च
4 परित्यज्य—ग परिगच्छति—च
5 सोमपानक्रियासक्तां
कपालाग्निसतिवताम्—ग
6 कुलनाशिनीम्— तुच्छितां—ग
8 देवेप्सितां—च
9 अग्निचक्र—क

भस्मरेखां परित्यज्य
गन्धपुष्प[7] प्रदायकाः ।
शिवसंस्कारविरताः
शिवसूत्रविवर्जिताः ॥ २१५ ॥

शिवदीक्षाविनीताङ्गाः
पापवेष्टितमूर्तयः
द्विजाधमाः सदा गन्धान्
लेपयन्ति[1]बलान्वितान् ॥ २१६ ॥

ते यान्ति प्रेतराजस्य
मन्दिरं भूतवेष्टितम् ।
भूतप्राणिद्विजान् सर्वान्[2]
भूतहोमसमन्वितान् ॥ २१७ ॥

होमदीक्षासमासक्तान्[3]
शिवदीक्षाविवर्जितान् ।
प्रवेशयन्ति ते दूताः
प्रेतराजस्य शासनात् ॥ २१८ ॥

---

[1] गन्धपुष्टि–ख
[2] लिम्बयन्ति–ग
[3] द्विजासख–ग
[4] सदासक्तान्–ख
सदायुक्तान्–क

सर्वधर्मान् परित्यज्य
शिवदीक्षां प्रयच्छति ।
स भक्तो मे प्रिये ! गौरि !
व्रजेत् जन्मविवर्जितम् ॥ २१९ ॥

सायुज्यं सर्वदा लोके[1]
प्रच्छमोह[2] विवर्जितम् ।
कालात्मनः कलामूर्तीन्[3]
कालरुद्रान् परान्परान्[4] ॥ २२० ॥

भूरुद्रान् जङ्गमान्[5] भूमौ
सेवितुं सर्वदेहिकाः[6] ।
स्वर्गस्थाः स्वरसंयुक्ताः[7]
नाकिनः कालकल्पनात्[8] ॥ २२१ ॥

इच्छन्ति सर्वदा[9] गौरि
अहो दीक्षां मनोरमाम् ।

---

1 सार्वदा केन–ख. ग
2 इच्छामोह–ग
3 कालमूर्तीन्–क. ख
4 परान्परान्–क
5 भूरुद्रजङ्गमान्–ग
6 सार्वदेहिकाः–ग
7 स्वरस्यपरसंयुक्ताः–च
8 कालकल्पयेत्–च
9 सार्वदा–ग

भूरुद्राणां जङ्गमानां[1]
किं करिष्यन्ति मानवाः ॥ २२२ ॥

कालः [illegible]वः शिवः कालः
इति ज्योतिषसाधकाः ।
त्रिस्कन्धपारगाः सर्वे
[illegible] यप्रभृतिदानवाः ॥ २२३ ॥

व्रजन्ति धर्मराजस्य
शासनाग्रममन्दिरम् ।
कालो जडः कर्मयुतेः
प्राचीसाधनसाधकः ॥ १२४ ॥

वीरमाहेश्वराणां च
सेवकः कर्मदायकः ।
इति भक्त्या सुरश्रेष्ठाव्
भूरुद्रान् जङ्गमान् भुवि[2] ॥ २२५ ॥

स्तोतुं सदा सुरा यान्ति[3]
कालत्वादतिरस्कृताः ।

---

1 भूरुद्रजङ्गमानां च—ग

2 भूरुद्रान् भूवनस्थले—ग

3 सुरस्तोमाः—ग

4 कालचेदिताः—क

ब्रह्मेन्द्रवायवः सर्वे
दीक्षालाः कायवेष्टिताः[4] ॥ २२६ ॥

त्यजन्ति सततं गौरि !
जडिनं कल्मषोदयम् ।
तं कालं प्रमथाः सर्वे
भस्मीकुर्वन्ति योगजात् ॥ २२७ ॥

शिवसंस्कारसंयुक्ताः
दीक्षा[1]मन्त्रप्रभावतः ।
षट्स्थलब्रह्मसन्धानात्
ब्रह्मानन्दप्रभावतः ॥ २२८ ॥

विषुवत् पञ्चकं लग्नं
विषनाडीसमन्वितम्
पापग्रहान्वितं पश्चात्
पापदृष्टिसमन्वितम्[2] ॥ २२९ ॥

ज्योतिश्चक्रात्मकं कालं
भस्मीकुर्वन्ति शाम्भवाः ।
षडध्व[3]षण्मतातीताः
अरिषड्वर्गवर्जिताः ॥ २३० ॥

---

[6] संयुक्तां दीक्षां—च

[7] इदमर्धं च पुस्तके न दृश्यते.

[3] षड्दर्शन—च.

वीरमाहेश्वराः सर्वे
कालकल्पसमन्वितम् ।
अनुसारथेमानं
भस्मीकुर्वन्ति सन्ततम् ॥ २३१ ॥

चन्द्रमानं गुरोर्मानं
ग्रहमानं तथैव च[1]।
प्राणलिङ्गप्रभावेन
भस्मीकुर्वन्ति शाम्भवाः ॥ २३२ ॥

तस्य तद्वचनं श्रुत्वा
हृष्टा भवति पार्वती ।
देवदेव जगन्नाथ
भक्ताभीष्टफलप्रद ॥ २३३ ॥

कालाधीनं जगत्सर्वं
इत्याहुः सनकादयः ।
कालस्वभावं मे[2] प्रीत्या
विस्तार्य[3] त्वमहं शिव ॥ २३४ ॥

---

1 ग्रहमानं शुभाशुभम्–क
2 कालस्वभावास्ते–च
3 विस्तृता हि मया शिवे–च
विस्तृतः–क, ख
अत्र विस्तारय इत्यस्यस्थाने विस्तार्य
इत्यादि छन्दोऽनुरोधेन ।

कथयामि तव प्रीत्या
इतिहासं सुविस्मितम् ।
गुरोर्दक्षिणदिग्भागे
वेदाद्रिर्वेधसा कृतः ॥ २३ ॥

अस्ति गौरि ! मम प्रीत्या
तस्मिन्नद्रौ विचित्रके[1] ।
कल्पान्तभैरवो रुद्रो
वीरमाहेश्वरप्रियः ॥ २३६ ॥

प्राणलिङ्गी प्रसादज्ञः[2]
पादतोयसमन्वितः ।
कालात्मा श्रीपतिः श्रीमान्
जितक्रोधो जितेन्द्रियः ॥ २३७ ॥

सर्ववेदार्थतत्त्वज्ञः
स्पष्टसिद्धान्त[3]साधकः[4] ।
त्रिस्कन्धपारगो लोके
यशस्वी यशसां निधिः ॥ २३८ ॥

गुणवान् सुश्रुतः[5] ख्यातः
मन्त्रालोचनतत्परः ।

---

1 विचित्रिते–क. ख. च
2 प्राणलिङ्गप्रसादज्ञः–ग
3 अब्दसिद्धान्त–ग
4 पारगः–क
5 विश्रुतः–क. च

मदनास्त्रविनिर्मुक्तः
भक्तकाशीसमन्वितः ॥ २३९ ॥

यतीनां देवतानां च
ऋषीणां हृदि भेदकः ।
वामहस्ते[1] सदा लिङ्गं
न्यस्य[2] पूजारतः प्रिये ॥ २४० ॥

षट्स्थलब्रह्मसंस्कार[3]
दीक्षामन्त्रविशारदः ।
माहेश्वरमनोध्यान
धारणाधारधार्मिकः ॥ २४१ ॥

दिगीशवृन्दवृन्दानां
ईशिता षड्गुणोदयः ।
पीनवक्षा विशालाक्षः
दीर्घकेशो धनुर्धरः ॥ २४२ ॥

ज्योतिषाङ्गः स्निग्धकायः
प्रसन्नवदनो विदाम् ।
वरो[4] वरशक्तियुतः
सर्वशस्त्रास्त्रपारगः ॥ २४३ ॥

---

1 सव्यहस्ते–ग
2 न्यस्तं–ग न्यास–च
3 ब्रह्मसंस्कार–ग
4 परो–ग (पा)

गाण्डीवी स्वरसन्दोहः
स्वरालापः स्वरेश्वरः[1] ।
तृणीकृताजविष्ण्वन्द्र
शिखिवायुकुबेरकः ॥ २४४ ॥

जडीकृत[2] जीवशुक्र[3]
नारदात्रिबुधोत्तमः ।
चतुष्षष्टिकलाविद्या
नारी[4] वदननायकः ॥ २४५ ॥

हृषीकविषयासक्त
वैष्णवब्रह्महेतुकः[5] ।
ज्ञानगुप्तः सदा गौरि !
देवदेवं निरञ्जनम् ॥ २४६ ॥

पिङ्गकेशं ललाटाक्षं
निरक्तं यतिनायकम् ।
निरालम्बं तत्त्ववेद्यं
अत्यतिष्ठद्दशाङ्गुलम् ॥ २४७ ॥

नित्यानन्दं नित्यतृप्तं
प्रणव[6]ज्ञानसाधनम् ।

---

1 सुरेश्वरः—च
2 जडीकृत—च
3 गुरुशुक्र—ग
4 विद्यासारे—ग
5 वैष्णवब्रह्महेतवः—ग
6 प्रणाम—ग

विभुं प्रभुं सुराणां च
द्विजानां सेवितं[1] शिवम् ॥ २४८ ॥

भूरुद्रं[2] जङ्गमं ध्यात्वा
स्वल्प[3]काल इति स्मृतः[4] ।
निगृह्य[5] ग्रहराजानं
आदित्यं अर्चिषां पतिम् ॥ २४९ ॥

निरुद्धय[द्ध]वान् ग्रहान् सर्वान्[6]
ज्योतिश्चक्रप्रवर्तकान् ।
वक्रगान् शीघ्रगान् गौरि !
ताराशशिसमन्वितान् । २५० ॥

इन्द्राग्नियमदिक्पाल[7]
विष्णुब्रह्मेन्द्रदैवतान् ।
ध्रुवतारासमासक्तान्[8]
ऋषिमण्डलवेष्टितान् ॥ २५१ ॥

---

1 जीवनं–क. च
सेविनं–ख
2 भूरुद्र–ग
3 स्वल्पं–क. ख. च
4 स्मृतम्–क
श्रुत्वा–ख
5 विगृह्य–ग निरुद्धय–ख. च
6 निरुतवान् ग्रहास्सर्वे–क
7 दिक्पालान्–च
8 वं योगकरणादि–क. ख. ग

उत्पाटितुं भगोलस्थान्
मेघमण्डलवेष्टितान् ।
इच्छाशक्तिबलं धत्ते
घोरनादभयान्वितम् ॥ २५२ ॥

तस्य नादं महाघोरं
श्रुत्वा सूर्यादिदेवताः[1] ।
पेतुस्तस्य पद्द्वन्द्वे[2]
अहो[3] कान्ते वरानने ॥ २५३ ॥

अहो वेदान्तवेद्याय
प्राणदानाय ते नमः ।
भूरुद्रध्यानसुक्ताय
भूपावनकराय ते[4] ॥ २५४ ॥

नमो नमः सदानन्द-
मूर्तये ब्रह्मणे नमः ।
अविद्याद्वन्द्वनिर्मोह
मलधूपयुतात्मने[5] ॥ २५५ ॥

---

1 चन्द्रार्किदेवताः—ग

2 णु—च

3 पादद्वन्द्वे—क. ख. ग

4 ध्यानसक्ताय ते नमः—च

5 मलदूषित आत्मने—क
मलरायतात्मने—च

नमो वेदान्तवेद्याय
वेदावासाय[1] ते नमः ।
कालकर्मपरित्याग
शीलदीक्षाय[2] ते नमः ॥ २५६ ॥

प्रमथेन्द्राय[3] विश्वाय
विश्वब्रह्मात्मने नमः ।
ब्रह्माण्डरोमकूपाय
मुक्तिकान्तावराय ते ॥ २५७ ॥

षट्चक्रचक्रवेद्याय
मानातीताय[4] ते नमः ।
मन्त्राक्षरशरीराय
मन्त्रराज्ञे[5] नमोऽस्तुते[6] ॥ २५८॥

अनाथाः प्राकृताः सर्वे
दीक्षाकर्मविवर्जिताः ।
तव[7] स्तोत्रमयं कर्म
नेश्महे जडदेहिकाः ॥ २५९ ॥

---

1 वेदवासाय–क. ख
2 शिलादीक्षाय–ग
3 प्रमथराजाय–ग
4 मूलातीताय–क. ख. ग. घ
5 अत्र टजभावः छन्दोऽनुरोधेन ।
6 नमोनमः ग
7 स्तव ग

श्रुत्वा स्तोत्रं महापुण्यं
 स नृपो[1] देवपूजितः ।
उवाच तान् ग्रहान् सर्वां
 प्रतिजग्राह हे[2] प्रिये ! ॥ २६० ॥

तेषां भक्तियुतं स्तोत्रं
 यः पठेत् स विमुच्यते[3] ।
इत्यद्भुतमहं श्रुत्वा
 नृपतेस्तस्य मन्दिरम् ॥ २६१ ॥

रथवाजिसमाकीर्णं
 रत्नकुट्टिमवेष्टितम् ।
वरनारीसमायुक्तं
 नाट्यशालासमन्वितम् ॥ २६२ ॥

वीरमाहेश्वराणां च ।
 प्राणावासं[4] परात्परम् ॥
शतकोटिगजैः शुद्धैः
 अष्टदिग्गजसंनिभैः ॥ २६३ ॥

वेष्टितं दिव्यसौधैश्च[5]
 चन्द्रकान्तशिलामयैः ।

---

1 तपो—ग
2 मे—क
3 माममेकं वरानने—ग
4 प्राणवासं—क. ख
5 साध्यै दिप्यैः—ग
 सौधै दिव्यै—च

सहस्रशृङ्गसङ्कीर्णैः
पद्मरागविराजितैः ॥ २६४ ॥

मेरुतुल्यैः पताकाद्यैः[1]
वैजयन्ती समन्वितैः ।
इन्द्रनीलद्वारयुतैः
पुष्यरागकवाटकैः ॥ २६५ ॥

गोमेधिकतुलाधार
पीठस्थैः वज्रवेष्टितैः
कार्तस्वरकुडचयुतैः
रचितं विश्वकर्मणा ॥ २६६ ॥

आदाय मे प्रिये गौरि !
मन्ये कैलासमुत्तमम् ।
पूर्ववन्निर्मितुं देवान्
इच्छामि प्रमथाज्ञया ॥ २६७ ॥

इदं पवित्रं पापघ्नं
चरित्रं मुक्तिदायकम् ।
यः शृणोति पठत्याशु
भावभक्ति[2]समन्वितः ॥ २६८ ॥

---

पताकास्तैः–च

[2] भावमुक्ति–क

भूरुद्राणां जङ्गमानां[1]
समाजेषु[2] जितेन्द्रियः ।
सर्वान् भोगान् समासाद्य
भुवि[3] देहावसानतः ॥ २६९ ॥

स याति मम सायुज्यं
सत्यं सत्यं वरानने ! ॥ २७० ॥

विषुवतोरयनयोश्च शतत्रयं[4]
षष्टिकं[5] दिवसमेकमब्दकम्[6] ।
पूर्वतोऽपि परतोऽपि संक्रमात्
नाडिकाश्च खलु षोडश षोडश ॥ २७१ ॥

इति श्रीवीरागमोत्तरभागस्य वीरमाहेश्वरतन्त्रस्य
वीरशैवदीक्षाकालनिर्णयो नाम तृतीयः पटलः

---

1 भूरुद्रजङ्गमानां च. ग.
2 सपूजेषु—क. ख
3 पद्यार्धमिदं—ग पुस्तके न दृश्यते ।
4 दिनत्रयं—क. ख
त्रयं—ग [5]षष्टिंत—क, ग
6 हरिपदे षडशीतिमुखेऽपि च—क. ख
6 इति श्री वीरागमे वीरशैवदीक्षाकाल-
निर्णयो नाम पञ्चमः पटलः—च

—O—

# वीरागमोत्तरे चतुर्थः पटलः[1]

———o———

[2]देवदेव जगन्नाथ !
विरूपाक्ष महेश्वर !
दीक्षाद्रव्याणि सर्वाणि
यानि तानि मम प्रभो ॥ १ ॥

वीरमाहेश्वराणां च
ब्रूहि त्वं करुणाकर !
शृणु गौरि ! प्रवक्ष्यामि
अहं सर्वाणि तान्यपि ॥ २ ॥

कार्तिके श्रावणे वाऽपि
माघे वा फाल्गुनेऽपि वा[3] ।
वीरमाहेश्वराणां च
दीक्षाकाले गते सति[4] ॥ ३ ॥

---

1 अयं च चतुर्थः पटलः क. ख पुस्तकयोः न दृश्यते । इत उत्तरस्य पञ्चमपटलस्य आरम्भे चतुर्थः पटलः इति दृश्यते ॥

2 श्रीगणेशायनमः । श्रीप्रभुगुरवे नमः वीरागममाहेश्वरतन्त्रस्य दीक्षाप्रकरणानि द्रव्याणि लिख्यन्ते ॥—च

3 कार्ति माघे मासे च फाल्गुने ॥—च



4 गमे सति—च

अनेकानि विचित्राणि
पुष्पाण्यादाय भक्तितः[1] ।
फलानि विविधान्याशु
कोमलानि सुरार्चिते[2] ! ॥ ४ ॥

पल्लवानि दलाग्राणि
विचित्राणि गुरोः क्रमात्[3] ।
आदाय भक्तिभावेन
गुरोः पादयुगं शुभम् ॥ ५ ॥

अर्चयित्वा मम प्रीत्या
गुरोराज्ञां पवित्रजाम् ।
आदाय जङ्गमान् सर्वान्
आहूय च पुनः पुनः ॥ ६ ॥

सुवर्णानि विचित्राणि
वस्त्राण्याभरणानि च ।
दत्त्वा सुरेश्वरांस्तांस्तान्[4]
वीरमाहेश्वरान् शुभान् ॥ ७ ॥

पूजयित्वा मम प्रीत्या
तेभ्यो माहेश्वरप्रिये[5] !

---

1 पुष्पाणि सुरभीणि च–च
2 रसानि च–च
3 कृपात्–च
4 सुरेश्वरान् तान्–क. ख. ग. घ
5 माहेश्वरप्रियात्–च

वेदशतं शुद्धगुणोपेतम्[1]
शुद्धसात्त्विकनिग्रहम् ॥ ८ ॥

वेदात्मानं पुण्यनिधिं
शिवं तत्त्वार्थपारगम्[2] ।
भवपाशविनिर्मुक्तं
शिवसूत्रसमन्वितम् ॥ ९ ॥

विद्वांसं मुक्तिकोशस्थं
साधनत्रयवर्जितम् ।
भावगम्यमृषिश्रेष्ठं
प्राणलिङ्गप्रतिष्ठितम् ॥ १० ॥

देशिकेन्द्रं गुरुश्रेष्ठं
षडध्वाध्यान[ध्वध्यान]साधकम् ।
निरीहं निश्चलं नित्यं
निपुणं जितमन्मथम् ॥ ११ ॥

कामत्यागं कलातीतं
क्रोधडम्भविवर्जितम्
नादब्रह्मस्वरमयं
नरनाटकविग्रहम् ॥ १२ ॥

---

1 शुद्धं गुणोपेतम् च

2 शिवतत्त्वार्थपारगम् च

गुणोदयं विश्वमूर्तिं
प्रसाद[1]ब्रह्मसेवितम् ।
स्वयंभुवं स्वरातीतं
स्वेच्छाविग्रहधारिणम् ॥ १३ ॥

तपोनिधिं भावगम्यं[2]
ऊर्ध्वरेतं मनोहरम् ।
भोगनिद्रापरित्यागं
निर्जाड्यं नीलकन्धरम् ॥ १४ ॥

षडक्षरमयं नित्यं[3]
योगाष्टकसमन्वितम् ।
वरदं भक्तसङ्घानां
वर[4]दानवसेवितम् ॥ १५ ॥

मदाष्टक[5] विनिर्मुक्तं
यमिध्यानपरायणम् ।
सहस्रदल[6]मध्यस्थं
सांख्ययोगतिरस्कृतम् ॥ १६ ॥

---

1 प्रसाद च
2 भावभाव्य च
3 सत्य च
4 वरं च
5 यदाष्टक क. ख.ग.ध
6 दळ च

वैशेषिकार्थदहनं[1]
सहस्राक्षं सदाशिवम् ।
व्योमकेशं प्रभुं प्राज्ञं
प्रमथाचारचारिणम् ॥ १७ ॥

[2]त्रिषष्टिशीलसंयुक्त-
शिवाचारप्रवर्तकम् ।
पापघ्नं परमाद्वैत-
साधकाचारसंयुतम्[3] ॥ १८ ॥

ध्यानयोगक्रियायोग-
भावयोगसमन्वितम् ।
सहस्रबाहुं सर्वज्ञं
मन्त्रावासं[4] परात्परम् ॥ १९ ॥

मायावादमहारण्य[5]-
दावानलमनामयम्[6] ।
बैन्दवज्ञानविध्वंसं[7]
बलशक्तिसमन्वितम् ॥ २० ॥

---

1 वदनं क. ख. ग. ध
2 पद्याधमिदं च. पुस्तके न दृश्यते
3 साधकाचारदूषितम् क. ख. ग. ध
4 मन्त्रवास च
5 महारण्य क. ख. ग
6 नल भयङ्करम् । च
7 बैन्दव ज्ञानविध्वसं च

क्षुद्रयोगसमासक्त[1]
शास्त्रज्ञानविवर्जितम् ।
शिवानन्दैकनिलयं
पञ्चभूतकवर्जितम्[2] ॥ २१ ॥

सप्तव्यसनसंस्कार[3]-
मायाशबलनाशनम्[4] ।
[5]षट्तर्कवाद ऊहार्थ-
दुरालापविवर्जितम् ॥ २२ ॥

श्रौतादिकमतोपेत-
प्रकृतिज्ञानभेदकम् ।
अक्षमालाधरं दीप्तं
कोटिसूर्यप्रभाऽन्वितम् ॥ २३ ॥

ब्रह्माण्डकोटिगर्भस्थं
लय[6]भैरव[7] वेष्टितम् ।

---

1 समायुक्तं च

2 इतः पर, च-पुस्तके—
जतिजातरजस्वलाप्रेताञ्छिष्ट विवर्जितम् । इत्यर्धमधिक दृश्यते ।

3 संस्कारं च

4 इतः परं चपुस्तके—धूतमांससुरापान
स्वर्णस्तेयमृगव्यथम् ।
इत्यधिक दृश्यते ।

5 षट्तर्कवाद इत्यारभ्य प्रकृतिज्ञानभेदकं इत्यन्तो भागः च पुस्तके न दृश्यते ॥

6 लय—च 7 भैरवं क. ख. ग. घ

निरीश्वरार्थमीमांसा[1]-
वादाचारार्थवर्जितम् ॥ २४ ॥

पाञ्चरात्रागमाचार-
विष्णुभक्तभयङ्करम्[2] ।
पादोदकक्रियाचार-
पावनत्रयवेष्टितम् ॥ २५ ॥

कुण्डलीयोगसंस्कारं[3]
कर्णकुण्डलधारिणम् ।
दशप्राणसमायुक्तं
इन्द्रिय[4] ज्ञानवर्जितम् ॥ २६ ॥

द्रव्योद्देशक्रियोद्देश-
क्षय[5]जीवविनाशनम् ।
विश्वतैजसजीवात्म-
प्रकृतिप्राज्ञदू[षकम्]षितम् ॥ २७ ॥

चेष्टासंयुक्तसंस्कार-
सप्ततन्तु[6] विनाशकम् ।

---

1 मीमांस–क. ख. ग. घ
2 विष्णुभयङ्करम्–क. ख. ग. घ
3 सस्कार–क. ख ग. थ
4 समासक्तस्वेन्द्रिय–च
5 द्रव्यद्वेषक्रियाद्वेषक्षय–च
6 सप्ततन्त्ल–च

हृत्पद्मपीठसंयुक्त[1]-
चलत्कुण्डलमण्डितम् ॥ २८ ॥

मन्त्रकुण्डाब्धि[2]सम्भूत[3]-
वडवानलतेजसम् ।
वैखानसमहोद्देश[4]-
गन्धसिन्धुमृगाधिपम् ॥ २९ ॥

मायावादिमहोद्देश[5]-
शैलवज्रधरं हरम् ।
अपूर्ववादभोगीन्द्र[6]-
वैनतेयपराक्रमम् ॥ ३० ॥

विधिवादविचारार्थ[7]-
गजकेसरिसंनिभम् ।
निर्विकल्पक्रियाभेद-
राजीवशशि संनिभम् ॥ ३१ ॥

सविकल्पार्थकुमुद-
कलोन्मील[8]रविप्रभम् ।

---

1 संयुक्तं–च
2 ताण्डाब्धि–क
3 सम्भूतं–च
4 मतोद्देश–च
5 मारारातिमतोद्देश–
6 अपूर्ववादं भोगीन्द्र–च
7 विचारार्थं–च
8 कलोन्मील–च

व्याप्तिवादार्थगाढान्ध
नाशनीकृतभास्करम्
[कारनाशकभास्करम्] ॥ ३२ ॥

योगरूढिदुरालाप
तिमिरग्रहनाशकम् ।
अष्टादशपुराणार्थ
पापपन्नगगारुडम्[1] ॥ ३३ ॥

उपाधिवाददावाग्नि[2]
शान्तितोयसमन्वितम् ।
कार्यवादक्रियासक्त[3]
मदहस्तिमृगाधिपम्[4] ॥ ३४ ॥

विलासवादभावज्ञ[5]
नारीजनभयङ्करम् ।
ब्रह्मजिज्ञासतत्त्वार्थ-
मन्तर्यामिणमीश्वरम् ॥ ३५ ॥

उद्देशभेदकोन्मूल
ब्रह्मविद्याप्रदायकम् ।

---

1 नाशनम्—क
2 दावाग्नि—च
3 क्रियासक्तं—च
4 मदकारणनाशनम्—क
5 भावज्ञं—च
6 तत्त्वार्थदेहमन्तयर्यामिणंशिवम्—च

चैतन्यबिम्बनिलय-
भक्तचेतनवर्धनम् ॥ ३६ ॥

ज्ञानविद्यामहाडम्भ-
चेतक[1]त्रयवेष्टितम् ।
भूतशुद्धि[2] क्रियोपेत-
भुवनत्रयपूजितम् ॥ ३७ ॥

स्नानसंध्याक्रियासक्त[3]-
होमकर्मतिरस्कृतम् ।
चतुःसाधनसंस्कार-
णाज्य[4] बर्हिति(स्ति)रस्कृतम् ॥ ३८ ॥

षट्पात्रसाधनाचार[5]-
चतुष्पात्रविवर्जितम् ।
वैदिकाचारनिरत[6]-
वर[7]दानवशीकरम् ॥ ३९ ॥

---

1 चेतन—क
2 भूतशुद्धि—च
3 क्रियासक्त—च
4 आज्य—क
4 चारं—च
5 निरत—च
6 वरं—च
7 क्रियायोग क

सप्तसंस्थक्रियायाग[1]-
द्विजदानव[2]ताडनम् ।
श्रीविद्यामन्त्रसंस्कार[3]-
शाक्तेय[4] जननाशनम् ॥४०॥

अन्तर्यागक्रियासक[5]
कौलागम[6]तिरस्कृतम् ।
बाह्ययागक्रियासक्त[7]-
द्विजचाण्डालमर्दनम् ॥ ४१ ॥

सौरवादक्रियासक्त[8]-
मदपङ्कजभेदनम्[9] ।
पितृश्राद्धक्रियासक्त[10]-
द्विजकाव्यविनाशनम् ॥ ४२ ॥

उद्वर्तवर्तार्थज्ञ[13]-
शक्तपीठधुरन्धरम् ।

---

1 द्विजराक्षस च
2 सत्कारं-च
3 शाक्त च
4 क्रियासक्त च
5 गौलागम क
6 क्रियासक्त च
7 ,,
8 भेदक क
9 क्रियासक्त च
10 द्विजकाव्ये च
11 नार्थज्ञ च

भस्मोद्धूलितसर्वाङ्गं
काषायीकृत[1]वाससम् ॥ ४३ ॥

पादुकान्यस्तसंसक्त[2]
पादद्वन्द्वविराजितम् ।
प्रणवाद्यष्टयोगार्थं[3]
तृणीकृतपुरन्दरम् ॥ ४४ ॥

जडीकृत[4]ब्रह्मविद्या
जडचैतन्यशोधकम्[5] ।
चित्तबुद्धिमनोमाया
जाग्रत्स्वप्न[6]विवर्जितम् ॥ ४५ ॥

रसशोणितमांसास्थि-
मेदोपूज्येन्द्रियोर्जितम् ।[7]
समाधि[8]साधनोपाय[9]
क्रियाघातसमन्वितम्[10] ॥ ४६ ॥

---

1 काषायकृत–च
2 संसक्त–च
3 योगार्थ–क
4 कृत–च
5 शोधनम्–च
6 जाग्रस्वप्न–क
7 मेदोमज्जावसामांसअस्तिशोणितवर्जितम् ॥
8 सामादि–क
9 नोपाय–च
10 क्रियाख्यातविचक्षणम्–च

नैसर्गिकक्रियाकाल-
मानदण्डधराधरम् ।
आणव[1]ज्ञानविरतं
परमाणवकारणम् ॥ ४७ ॥

मोक्षनारीरतिकीडा[2]
तत्त्वातत्त्वप्रदायकम् ।
मुक्तिसोपानसंयुक्त[3]-
मन्त्राक्षरसमन्वितम् ॥ ४८ ॥

नवद्वारसमासक्त[4]
देहग्रामचलीकृतम् ।
चक्रपद्मदलाग्रस्थं
योग[5]चक्रसमुद्धृतम् ॥ ४९ ॥

भक्तभक्तिक्रियोपेतं
आज्ञाज्ञानप्रदायकम् ।
उदासितारं विश्वानां
प्रतिमासूत्र[6] धारिणम् ॥ ५० ॥

---

[1] प्रणव—च
[2] रतिक्रीड—च
[3] संयुक्त—च
[4] समासक्त—च
[5] योग—च
[6] सूत्रप्रतिम—क

सुषुप्ति योगनिलयं[1]
वीराचारैकवर्तिनम्[2] ।
आख्यातवादतत्त्वार्थ
निगृहीतमनोभवम्[3] ॥ ५१ ॥

असत्ख्याति[4]स्फुरत्तत्त्व
तत्त्वमस्येकदूषितम्[5] ।
विख्यातवादपाषण्ड
चण्डदीधितिनाशनम् ॥ ५२ ॥

गतस्पृहगणाध्यक्ष
गुरुदीक्षासमन्वितम् ।
त्रिषष्टितन्त्रराजानं
शीलादिऋषिपूजितम् ॥ ५३ ॥

विश्वगर्भविलासस्थ
व्यापकत्रयवेष्टितम् ।
चम्पकन्यासर्वाङ्गं
रुद्रं भद्र[7]गुणान्वितम् ॥ ५४ ॥

---

1 निलयं–च

2 वर्तनम्–च

3 मनोद्भवम्–क

4 असख्यात–च

5 तत्त्वमस्योक्तिदूषितम्–च

6 नमक–क

7 रुद्रभद्र च

कालकर्मक्रियायोग-
तिथिमासाब्दवेष्टितम् ।
इला[1]पिङ्गलयोगस्थ[2]-
वायु प्रत्यक्षदूषितम् ॥ ५५ ॥

अनुद्भूतस्वरमय-
श्वसनार्थं[3]विनाशनम् ।
उद्भूतरूपस्पर्शाङ्ग[4]-
गन्धमारुतरोधकम् ॥ ५६ ॥

नित्यविज्ञानमानन्दं[5]
सुखदुःखविवर्जितम्
प्रमाणसंशयातीतं
अनुमानैकशोधकम् ॥ ५७ ॥

हस्त[6]मस्तकसं योग[7]-
वेदमूर्ध्नि प्रतिष्ठितम् ।
सहस्रशीर्षं पुरुषं
अत्यतिष्ठद्दशाङ्गुलम् ॥ ५८ ॥

---

1 इडा–क
2 योगस्थ–च
3 स्वशनार्थ–क. ख. ग
4 स्पर्श–च
5 नित्य विज्ञानमानन्द–क. ख. ग
6 हास्त–च
7 सयोगं–च

प्रपञ्चसारसम्पन्नं[1]
 कायकल्मषनाशनम् ।
वीरमाहेश्वरं श्रेष्ठं
 भूरुद्रं कुलपावनम् ॥ ५९ ॥

अर्चयित्वा समाशीलान्[2]
 ऋत्विजान्[जः ऋ]षिपुङ्गवान् ।
चतुरः[3] सात्त्विकान् शुद्धान्
 शिवाचारप्रवर्तकान् ॥ ६० ॥

आगमज्ञान् सदाचारान्
 वेदमूर्ध्नि प्रतिष्ठितान्
शिवध्यानरतान् लोके
 ब्रह्मसन्धानसाधकान् ॥ ६१ ॥

वीरमाहेश्वरान् गौरि !
 दृढभक्तिसमन्वितः[4] ।
शिष्यसङ्घो मुदा प्रीत्या
 पूजयेत् भावभक्तितः ॥ ६२ ॥

स्वर्णस्वरूपान् कुम्भांश्च[5]
 रचयेत् भक्तिभावतः ।

---

1 समग्र–क. ख. ग
2 सुशीलान्–क. ख. ग
3 चतुरान्–क. ख. ग
4 समन्वितान्–च
5 स्वर्णान्वितानि कुम्भानि–क. ख. ग

अथवा राजतान्यानि[1]
पञ्चकान् सुघटानपि[2] ॥ ६३ ॥
कांस्यांश्च पित्तलान् सत्त्वान्
पाषाणांश्च दृढव्रतः[3] ।
कारयेत् भक्तिभावेन
भक्तिश्रद्धासमन्वितः ॥ ६४ ॥
ताम्रकुम्भान् रत्नमयान्
नारिकेलांस्तरूद्भवान्[4] ।
कारयेत् भक्तियुक्तः सन्
वैराग्यज्ञानसाधकः[5] ॥ ६५ ॥
अथवा मृण्मयानन्यान्
वर्तुलान् कलशानपि[6] ।
आदाय मनसा ध्यानं
गुरुं ज्ञानप्रदायकम् ॥ ६६ ॥
कृत्वा प्रसन्नवदनः
नवभक्तिसमन्वितः[7] ।

---

1 राजन्यस्य-च
2 कांस्यनि च विचित्रणि कुम्भान्यपि दृढव्रतः ।
3 पञ्चकानि घटान्यपि-क. ख. ग
4 ताम्रकुम्भानि रक्तानि पञ्चकानि तथा प्रिये-क. ख. ग.
5 भक्तिज्ञानैकसाधने !-क. ख. ग
6 अथवा मृण्मयान्यानि वर्तुलानि घ न्यपि ।-क. ख. ग
7 एतदनन्तरं-च. पु स्तके-षोडशस्तम्भसंयुक्तं कामनं मण्टपं शिवे ।
शुद्धभूमौ तु कुर्वीत नानालङ्कारसंहितम् ॥
इति पाठो दृश्यते ।
शिवयोगमन्दिरसम्पादिते घ. पुस्तके तु इतःपूर्वं—भूरुद्रे चक्रशोधिते—

कुम्भमध्ये सुवर्णानि[1]
नवरत्नानि निक्षिपेत ॥ ६७ ॥

न्यासपञ्चकमुद्राणि[2]
भस्मपिण्डानि निक्षिपेत्
वटार्कचूतन्यग्रोध-
बिल्व[3]पर्णानि निक्षिपेत्[4] । ॥ ६८॥

शालितण्डुलमध्येषु[5]
कलशानि समन्ततः ।
प्रतिष्ठाप्य महादेवं
गुरुं शान्त[6]गुणान्वितम् ॥ ६९ ॥

आहूय ऋत्विजः सर्वान्[7]
वीरमाहेश्वरान् शिवान् ।
पूजयित्वा मम प्रीत्या
व्रती[8] भक्तिसमन्वितः ॥ ७० ॥

---

इत्यन्तः षष्ठपटलभागः दृश्यते ।

1 विशीर्णानि–क. ख. ग

2 वस्त्राणि–च

3 पक्ष–घ.च

4 भक्तिमान्–च

5 पञ्चपद्मे तण्डुलाग्रे–च

6 शान्तं–च

7 ऋत्विजान् सर्वान्–क. .ग
ऋत्विजश्चतुरः–घ

8 व्रति–च

तेषामुपरिदिग्भागे
स्वर्णवर्णानि[1] हे प्रिये !
वस्त्राणि विविधान्याशु
दत्त्वा भक्तिसमन्वितः ॥ ७१ ॥

ईशान्य[2]कलशे दिव्ये[3]
रेणुकान्वयसंभवम्[4] ।
आचार्यं भद्रपीठस्थं
पूजयेत् शुद्धभावतः ॥ ७२ ॥

आग्नेयकलशे दीप्ते[5]
मङ्गलस्वरसंयुतः ।
शिंशुमारगणाधिप्र [दिग्र]
शिष्यान्वयसमुद्भवम्[6] ॥ ७३ ॥

ऋत्विजं शान्तिनिलयं
वेदमूर्ध्नि प्रतिष्ठितम् ।

---

1 पर्णानि—क. ख. ग
2 ईशान—घ. च
3 देवि । —घ.च
4 मामेवागमविग्रहम्—घ. च
5 दक्षिणे कलशे गौरि घ. च
6 दारुकं शिंशुमारादिशिष्ययुक्तमघोरजम्—घ.च

पूजयित्वा मम प्रीत्या
मन्त्रमाता[तृ]षडक्षरीम् ॥ ७४ ॥

विलिखेत् तत्त्वसंयुक्तां
नादबिन्दुकलान्तिकाम् ।
वारुणे कलशे गौरि !
शिलापादकुलोद्भवम् ॥ ७५ ॥

आचार्यं प्रमथश्रेष्ठं
प्राणलिङ्गप्रतिष्ठितम् ।
पूजयित्वा जपेन्मन्त्रं
शैवपञ्चाक्षरान्वितम् ॥ ७६ ॥

नमः शिवः शिवो देवः
इति कारुण्यभावतः ।
वायव्यकलशे दीप्ते
पञ्चसूतकवर्जितम् ॥ ७७ ॥

लिङ्गोद्भवं सुरश्रेष्ठं
सद्योजातमुखान्वितम् ।
ऋक्षपादकुलोद्भूतं
प्राणलिङ्गप्रतिष्ठितम् ॥ ७८ ॥

प्रसादभावशुद्धात्म
कायकल्मषनाशनम् ।

पूजयित्वा जपेन्मन्त्रं
रुद्रसूक्तसमन्वितम् ॥ ७९ ॥

चतुरक्षरसंयुक्तं
चतुर्वर्गप्रदायकम् ।
नमः सोम इति प्रीत्या
व्रती निश्चलभावतः ॥ ८० ॥

चतुर्णां मध्यकलशे
स्वपापघ्नं कुलान्वितम् ।
मन्त्रकायं तत्त्वनिधिं
सर्वज्ञं सात्त्विकं गुरुम् ॥ ८१ ॥

पूजयित्वा मम प्रीत्या
तच्छिष्यान् रुद्रसन्ततीन् ।
वीरमाहेश्वरान् सर्वान्
तोषयित्वा पुनः पुनः ॥ ८२ ॥

द्रोणपुष्पैः बिल्वपत्रैः
मल्लिकाजातिचम्पकैः ।
पुन्नागैः कुन्द[1]कुटजैः
मातुलुङ्गैश्च केतकैः ॥ ८३ ॥

दुत्तूरैः पद्मकल्हारैः
कुमुदैः कोमलैः शुभैः[2] ।

---

1 कुन्दैः—घ.

2 दुत्तूरपद्मकल्हारकुमुदैः गोरठैः बकैः—क. ख. घ

यूथिकामालतीझण्टैः
अशोकैर्[1]नागकेसरैः ॥ ८४ ॥

घुसृणैः कुसुदैर्दीप्तैः[2]
पालाशैः प्रसवैः शुभैः[3]
गिरिपद्मैः कुन्दकुटजैः
तिरपुष्पैः तिलाक्षतैः[4] । ॥ ८५ ॥

चूतपुष्पैः चूतगन्धैः
रक्तपल्लववेष्टितैः[5] ।
धमनैर्मरुगैर्भटैः[6]
कुरटीपल्लवान्वितैः[7] ॥ ८६ ॥

दाडिमैर्धात्रिगुच्छैश्च
क्रान्तपत्रैर्जपैश्शुभैः[8] ।
क्रमुकैर्नारिकेलैश्च
सप्तपर्णैः[9] कुराटकैः ॥ ८७ ॥

---

1 झण्डी अशोकैः—क. ख ग

2 कुसुमैः—क. ख. ग कुसुम्भैः—च

3 जालपाटलः—घ. च

4 गिरिपद्मैः दर्भपुछैः चन्द्यावर्तातसीतलैः घ. च

5 चूतनारङ्गजम्बीरकित्तलीपिचुमन्दकैः—घ च

6 दमनैर्भिन्दरैर्वटैः—क. ख ग

7 कुरटीबालराक्षसैः—घ. च

8 दालिम्बधात्रीबृहतीशक्रक्रान्ताजपाशुकैः—घ. च

9 मदुराङ्गि—घ मदुरङ्ग—च

नखपुष्पैः सिताम्भोजैः[1]
बाहुपुष्पैः वलक्षयैः ।
शतपत्रैः नवदलैः
खड्गपुष्पैश्च केरटैः ॥ ८८ ॥

राजिकै[2]राधिकैर्लाक्षैः
जटामांसै[3]र्जलार्क्कैः ।
पारिभद्रैः बाह्लीकैः
गाढकैः[4] जलधारकैः ॥ ८९ ॥

अन्यैर्विचित्रैः कुसुमैः
कुद्मलैश्च सुपत्रकैः[5] ।
पूजयेद्देवदेवेशं
गुरुं लोकपितामहम् ॥ ९० ॥

निर्जाड्यं निर्विकल्पं च
दृढभक्तिसमन्वितः ।
द्व्यक्षरान्वित[6]संसर्गं
गुरुरित्यक्षरद्वयम् ॥ ९१ ॥

---

1 स्थलाम्भोजैः–घ च

2 रजिकैः–च

3 नटामांसै–घ

4 गडिकैः–च

5 करवीरैर्नभेरुभिः । तमालैः कङ्खिवालैश्च किअल्कैर्वनचम्पकैः ।
काम्करतूरिसुण्डिकमच्चापामार्गभृङ्गकैः ।
वन्यैः पुष्पैः पल्लवैश्च कुद्मलैः कोमलैः शुभैः ॥
इति–घ· च·पुस्तकयोरधिकंदृश्यते ।

6 द्व्यक्षराह्वय–घ. च

सप्तकोटिमहामन्त्र-
राजानं पापनाशनम् ।
तन्मन्त्रं पाठयेदाशु[1]
भवपाशनिवृत्तये[2] ॥ ९२ ॥

पादोदकप्रसादेन
पापनाशनहेतुना ।
बलभक्तिसमाजेन
अजडेन महात्मना ॥ ९३ ॥

माहेश्वरकुलोद्भूतान्
प्राणलिङ्गप्रतिष्ठितान् ।
भूरुद्र[3]जङ्गमान् भूमौ
तुष्टिं कृत्वा सुभक्तितः[4] ॥ ९४ ॥

आलम्बन[5]यष्टिदण्डं
घण्टारव[6]समन्वितम् ।
जटापटलसंछन्न-
मूर्ध्नि[7] मध्यप्रतिष्ठितम् ॥ ९५ ॥

---

1 पठयेत्याशु—क. ख. ग.
2 पापविवर्जितः—क. ख. ग.
3 भूरुद्रान्—घ. च
4 सुभक्तिमान्—घ. च
5 आलम्ब—क. ख. ग
6 यष्टलग्नघण्टापाश—च
7 संछन्नमूर्धमध्य—घ. च

रुद्राक्षकङ्कणधरं[1]
रुद्रध्यानपरायणम्[2] ।
अक्षपादकुलोद्भूतं
अतिथिं पूजयेत् सुधीः ॥ ९६ ॥

करखड्गधरं[3] शान्तं
भस्मरुद्राक्षवेष्टितम् ।
भीमनादस्वरोपेतं[4]
प्राणलिङ्गप्रतिष्ठितम् ॥ ९७ ॥

घनलिङ्गमितीत्याहुः[5]
भूरुद्रं घनलिङ्गकम्[6] ।
पूजयित्वा[7] मम प्रीत्या
जितक्रोधो जितेन्द्रियः[8] ॥ ९८ ॥

गृहदार[9]समोपेतं
सुतभ्रातृसमन्वितम्[10] ।

---

1 करं–घ. च
2 रुद्राक्षकर्णपत्रकम्–घ. च
3 कन्थादण्डधरं–घ. च
4 भीमनादं खड्गहस्तं–घ. च
5 मिति ध्यात्वा–घ. च
6 रेणुकान्वयम्–घ. च
7 पूजयेत–घ
पूजयेत्–च
8 जितक्रोधाजितेन्द्रियम्–च
9 कृपाधारा–क. ख. ग
10 पुत्रभ्रातृसमन्वितः–घ. च

शुद्धतत्त्वान्वितं[1] शान्तं
प्राणलिङ्गप्रतिष्ठितम् ॥ ९९ ॥

रुद्राक्षकण्ठवलयं[2]
प्रसादब्रह्मसेवितम् ।
त्रियक्षरमयं भीमं
आराध्यमिति रेणुकः[3] ॥ १०० ॥

स आह भगवान् गौरि !
तमाराध्यं प्रपूजयेत् ।
व्याघ्रकन्थं लोष्ठकन्थं
चन्द्रकन्थं जनाधिपम्[4] ॥ १०१ ॥

प्रत्येकं पूजयेत्याशु[5]
ध्यानसाधनसात्त्विकः ।
पूर्वयामे शिवध्यानात्
योगिनं तत्त्वपारगम् ॥१०२ ॥

---

1 शुद्धतत्त्वगूर्ण–घ. च

2 रुद्राक्षवलयं कण्ठे–घ
,, कण्ठ–च

3 रेणुकम्–च
अस्यार्धस्य स्थाने

4 पस्तिकन्थं मयःकन्थं स्वर्णकन्थं परायणम् । व्याघ्रकन न्द्रकन्थ गोणिकन्थां दशानने । मच्छ कन्थां मायकन्थां स्वर्णकन्थां पुराणिकम् मुक्तां कन्थां नारकन्थां मुक्तिनूपुरधारकम् । जालन्द्रकन्थां गोणिकन्था गिरि-श्वरम् । चतुःषष्टिपपीठोत्थं चतुःपीठसमुद्भवम् ॥ इति च पुस्तके दृश्यते ।

5 पूजयेच्छिष्यो–च

प्रत्यक्षमोक्षसन्धान[1]-
लीलामानुषविग्रहम् ।
अर्चयित्वा[2] मम प्रीत्या
मङ्गलध्यानपूर्वकैः ॥ १०३ ॥

नमः सोमविभूषाय
वेदान्तनिलयाय ते ।
रुद्राक्षव्याप्तदेहाय
रुद्रतुल्याय[3] ते नमः ॥ १०४ ॥

अनाद्यविद्यासंस्कार[4]-
निर्मोहाय व्रतात्मने[5] ।
अशेषप्रमथराजाय[6]
गुरवे परमात्मने ॥ १०५ ॥

अज्ञानध्वान्तसूर्याय
आज्ञाचक्राय[7] ते नमः ।
त्रिषष्टिशीलसम्पन्न-
शिवभक्ति[8]प्रियाय ते ॥ १०६ ॥

---

1 सन्धानं–च
2 अर्चयेत–च
3 रुद्रसोमाय–च
4 अनादिविद्यासंसार–क. ख. ग.
5 ऋतात्मने–क. ख. ग
6 प्रमथाराज्ञे–च
7 अग्निचक्राय–च
8 भक्त–च

प्राणलिङ्गाय शान्ताय
प्रणवब्रह्मरूपिणे[1] ।
जडचैतन्यवैभाग[2]-
विभवे तत्त्वमूर्तये[3] ॥ १०७ ॥

सहस्रदलमध्य [स्थ]स्थ
लीलालोलचराय ते ।
पवित्रमन्त्रकायाय[4]
परब्रह्माय ते नमः ॥ १०८ ॥

जगत्सूत्रशरीराय
जगदानन्दमूर्तये ।
वेदमूर्ध्नि प्रतिष्ठाय
तत्त्वावासाय ते नमः ॥ १०९ ॥

वैन्दवज्ञाननिर्मोह-
सुरराज्ञे (?) नमोऽस्तु ते ।
सिद्धान्तवादविध्वंस-
वदनाय नमोऽस्तु ते ॥ ११० ॥

ब्रह्माण्ड[5]गर्भसम्भूत-
लोकपालतिरस्कृते ।

---

1 ब्रह्मणे नमः–च
2 वैभव–च
3 मूर्तयः–च
4 कामाय–क. ख. ग
5 ब्रह्माणु–क. ख. ग

आधारचक्रवेद्याय
आणवज्ञानमूर्तये ॥ १११ ॥

निर्लेपकाय नित्याय
लोकधात्रे नमोऽस्तु ते ।
विश्वपित्रे जगत्कर्त्रे
पापहर्त्रे नमोऽस्तु ते ॥ ११२ ॥

भक्तपापविनिर्मुक्त-
पादद्वन्द्वाय ते नमः[1] ।
पादोदकप्रसादाय[2]
षट्स्थलब्रह्मणे नमः ॥ ११३ ॥

पञ्चविंशतिलीलाङ्ग-
पञ्चब्रह्ममयाय ते ।
पञ्चाक्षरन्यासबीज-
निदानाय नमोऽस्तु ते ॥ ११४ ॥

चन्द्रार्कवह्निनेत्राय
जटाजूटाय[3] ते नमः
दिगम्बराय दिव्याय
कूटस्थाय नमोऽस्तु ॥ ११५ ॥

---

1 भक्तपातकनिर्मुक्तपादद्वन्द्वाय वै नमः—घ. च

2 प्रसादार्थ—क. ख. ग

3 जटागङ्गाय—घ. च

अज्ञानतत्त्वभेद्याय
मदनाशाय ते नमः ।
भक्तवारिधिसोमाय
सर्वज्ञाय नमोऽस्तु ते ॥ ११६ ॥

स्वरव्यञ्जन[1]वेद्याय
विधानाथाय ते नमः ।
वीयवन्ताय वीर्याय
तपःक्षेत्राय ते नमः ॥ ११७ ॥

तप्तमुद्राविदद्राय
स्वच्छात्रासाय[2] ते नमः ।
कुण्डली[3]धारकुण्डाय
कुण्डलाय नमोऽस्तु ते ॥ ११८ ॥

द्विजहोमविनाशाय
दक्षाध्वरहराय ते ।
जडीकृतद्विजेन्द्राय
कषायामलवाससे ॥ ११९ ॥

पञ्चसूतकनिर्मुक्त-
निर्मोहाय शिवाय ते ।

---

1 सर्वेस्वराय–क. ग. ग

2 स्वेच्छावासाय–घ. च

3 कुण्डलि–च

योगनिद्राविलासाय
भागभाग्याय ते नमः ॥ १२० ॥

प्रेतलिङ्गार्चनज्ञान-
त्याजमानाय[1] ते नमः ।
धर्मार्थकाममोक्षाय
रुद्रसूक्ताय [2]ते नमः ॥ १२१ ॥

दिक्पालप्राणदाताय
दिनाधिपतये नमः ।
रुद्राक्षदाम[3]भूषाय
ज्योतिषां पतये नमः ॥ १२२ ॥

सन्तालवालजाताय
धर्मवृक्षाय ते नमः ।
नदीवासशरीराय[4]
कृतज्ञानाय ते नमः ॥ १२३ ॥

तम[मो]घ्नाय द्विजघ्नाय
क्षेत्रपालाय ते नमः ।
पितृकर्मविनाशाय
लोकतातय ते नमः ॥ १२४ ॥

---

1 त्यचमानाय—च
2 रुद्रसूत्राय -च
3 धाम—च
4 शरीरादि—च

हव्यकव्यविनाशाय
प्राणलिङ्गाय ते नमः ।
भवपाशविनाशाय
ब्रह्माण्डविलयाय ते ॥ १२५ ॥

चतुः षष्टिकलाविद्या-
सातिनाथाय ते नमः ।
अरिषड्वर्ग दग्धाय
कामभस्माय ते नमः ॥ १२६ ॥

पञ्चकोशात्मचैतन्य-
भद्रपीठाय ते नमः ।
ईषणत्रयदुर्मोह[1]
विगताय नमो नमः ॥ १२७ ॥

षडध्वमानदण्डाय
मोक्षसोपानहेतवे ।
इलापिङ्गलमार्गस्थ[2]-
मन्दमारुतधारिणे ॥ १२८ ॥

कन्दुकीकृत[3]ब्रह्माण्ड-
करधात्रि [त्री]फलाय च ।
भस्मोद्धूलितदेहाय
बलभद्राय ते नमः ॥ १२९ ॥

---

1 निर्मोह—च
2 मार्गस्थ—च
3 कन्दुदिक्कृत—च

करवीकृत[1] योगीन्द्र-
मौलिपादाय ते नमः ।
शम[2]शान्तशरीराय
शरण्याय नमो नमः[3] ॥ १३० ॥

चित्ररत्नाय चित्राय
चिच्छक्तिज्ञानमूर्तये ।
ऊर्ध्वमूलाय ऊ[र्ध्वो]र्ध्वाय
पिङ्गकेशाय ते नमः ॥ १३१ ॥

वीरमाहेश्वराचार
वीरभद्राय ते नमः ।
अशेषप्रमथाचार-
गुरूणां गुरवे नमः ॥ १३२ ॥

उपमन्युदधीच्याग्नि-
शिष्यज्ञाय ते नमः ।
शिशुमारगणाध्यक्ष-
रेणुकाचारचारिणे ॥ १३३ ॥

कुमारगुरवे तुभ्यं
लीलाज्ञानप्रदाय ते ।

---

1. कस्तीकृत—क. ख. ग.
2. शमि—च
3. शरण्याय नमोऽस्तु ते—च

एतैर्नामभि[1]र्महादेवं
आचार्यं पूजयेत् सुधीः ॥ १३४ ॥

कार्तस्वरान्वितं वस्त्रं
सूक्ष्मतन्तुपरिष्कृतम् ।
तुभ्यं दास्यामि देवेश[2]
ममाभीष्टप्रदायक[3] ! ॥ १३५ ॥

एतेन मनुना शिष्यः[4]
वस्त्रं दद्याद्वरानने[5] !
रुद्राक्षकुण्डलादीनि[6]
रत्नहेमयुतान्यपि[7] ॥ १३६ ॥

तुभ्यं दास्यामि[8] हे नाथ
मम ज्ञानप्रदायक[9] !
इति दत्त्वाऽर्चयित्वार्यं[10]
अष्टावरणवेष्टितम्[11] ॥ १३७ ।

---

1 नामि–क. ख. ग.
2 समर्पितदेव–च
3 प्रदायकम्–च
4 मन्त्रराजेन–क. ख. ग
5 दत्त्वावरानने–क. ख. ग.
6 कुण्डलान्यानि–क. ख. ग.
7 रत्नयुक्तानि कान्यपि–क. ख. ग
तुभ्यमर्पतु –च
प्रदायकः–च
10 इतिदत्त्वामहाश्रेष्ठं–क. ख. ग
11 अष्टवर्णप्रवेष्टितम्–च

पञ्चब्रह्मैकमन्त्रस्थं
वेदमूर्ध्नि प्रतिष्ठितम् ।
कालाग्निरुद्रसंस्कारं[1]
पञ्चधेनुसमुद्भवम् ॥ १३८ ॥

पञ्चाक्षरमयं शुद्धं
भस्मपिण्डं[2] समर्पयेत्[3] ।
तेषां माहेश्वराणां च
ऋत्विजां शिवयोगिनाम् ॥ १३९ ॥

मृत्पात्रमर्घ्यपादाब्जान्[4]
गङ्गासिन्धुसमन्वितान्[5] ।
अमलब्रह्मतत्त्वार्थ-
हेतूनामप्रणाशनान्[6] ॥ १४० ॥

प्रक्षाल्य मन्त्रतोयेन
दृढभक्तिसमन्वितः ।
द्राक्षेक्षु कदलीखण्ड
नैवेद्यं फलपूरितम् ॥ १४१ ॥

पञ्चभक्ष्यसमोपेतं
गोघृतेनसमन्वितम् ।

---

1 संस्कार –
2 भस्मपीडं–क. ख. ग
3 प्रदापयेत्–च
4 मृत्पात्रमध्ये तान् वादान्–क. ख. ग  मृत्पात्रमर्घ्यपाद्य–च
5 मुखान्विनान्–च
हेतून् पापप्रणाशनान्–क. ख. ग

सूपपायससंयुक्तं
सूपशाकसमन्वितम् ॥ १४२ ॥

सर्वशाकसमोपेतं
तस्य तोयस्य हे प्रिये !
दत्त्वा प्रदक्षिणं कृत्वा
दृढभक्तिसमन्वितः[1] ॥ १४३ ॥

कुङ्कुमागरुकस्तूरि-
कोष्ठ[2]चन्दनवेष्टितम् ।
जटामांस[3]लवङ्गैश्च[4]
संयुक्तं आ[चा]गमान्वितम् ॥ १४४ ॥

धूपाष्टकं भक्तियुक्तं
दत्त्वा तस्य मम प्रिये !
देवदेव जगन्नाथ
केन योगीश्वरेण च ॥ १४५ ॥

अकारि तस्य मे प्रीत्या[5]
धूपं पापप्रणाशनम् ।
इतिहासं महाश्रेष्ठ
भक्तिमुक्ति[6] प्रदायकम् ॥ १४६ ॥

---

1 दक्षहस्तेनभक्तिमान्—च
2 कोष्ट—च
3 मांसि—च
4 ङ्गाद्यैः—च
5 अर्पितं तस्यलिङ्गस्य—घ. च
6 भ क भक्ति—क ख. ग

ब्रूहि शम्भो महादेव
नित्यानन्द निरञ्जन !
इति तद्वचनं श्रुत्वा
देवदेवः सदाशिवः ॥ १४७ ॥

रहसि[1] प्रमथमध्ये[2]
सतीं प्रति ह्युवाच सः[3] ।
जम्बूद्वीपे भारताख्ये[4]
पुरी[5] गन्धर्वसेविता ॥ १४८ ॥

सिद्धसाध्यसमाकीर्णा[6]
वीरमाहेश्वरान्विता ।
अस्ति गौरि सुरस्तोमा[7]
भीमनादसमन्विता ॥ १४९ ॥

शिखावती[8] शिवध्यान-
योगिनां योगदायिका ।
तत्रस्थितं गुरुश्रेष्ठं[9]
वीरमाहेश्वरं शिवम् ॥ १५० ॥

---

1 रहसि–घ सदाशिय–च
2 प्रमथामध्ये–घ
3 सतिं प्रति उवाच सः–क. ख. ग
4 भरतवर्षे–क. ख. ग
5 पुरे–क. ख. ग
6 कीण–क. ख. ग
7 सुरस्तोम–क. ख. ग
8 शिखावति–क. ख. ग
9 तत्रस्थो गुरुश्रेष्ठं–क. ख. ग

ओंखिलं तत्त्वनिलयं
प्राणलिङ्गे प्रतिष्ठितम् ।
धूपशील[1]समायुक्तं
ददर्श मुनिपुङ्गवम् ॥ १५१ ॥

देशिकेन्द्रो गुरुश्रेष्ठः[2]
षट्स्थलागमकोविद[3]ः ।
तमोहिलं[4] तत्त्वनिधिं
धूपशीलसमन्वितम् ॥ १५२ ॥

प्रत्युवाच मम प्रीत्या
व्रतिनां ब्रह्मचारिणाम् ।
वीरमाहेश्वराणां च
प्राणलिङ्गेषु ते प्रभो ॥ १५३ ॥

धूपधूम्रं[5] भक्तिपुर[6]
दत्वा शङ्करसन्निधिम् ।
गच्छ त्वमिति[7] तद्वाक्यं
श्रुत्वा भक्तिसमन्वितः[8] ॥ १५४ ॥

---

[1] रीति–च
[2] तत्पुरुषमुखोद्भूतः–च
[3] तत्त्वशास्त्रविशारदः–क. ख. ग
[4] चमोखिलं–क. ख. ग
[5] धूम्र–च
[6] पुरं–क. ख. ग
[7] गन्तव्य इति–क. ख.ग
[8] समन्वितम्–च

ओहिलो[1] धर्मतत्त्वज्ञः
प्रमथाचारवेष्टितः ।
वीरमाहेश्वरान् सर्वान्
वीरव्रतसमन्वितान् ॥ १५५ ॥

याचयामास तद्धूपं
अष्टगन्धसमन्वितम्[2] ।
भूरुद्रजङ्गमानां च[3]
प्राणलिङ्गेषु भक्तितः ॥ १५६ ॥

दत्त्वा दिनेदिने गौरि
कस्मिन् काले[4] गते सति ।
ओहिलस्य[5] महाभक्तिं
को वा वक्तुं सुराधिपः ॥ १५७ ॥

समर्थो भवतीत्याहुः
नारदाद्याः सुरर्षयः ।
तेषां तद्वचनं[6] श्रुत्वा
सुत्रामा सुरसेवितः ॥ १५८ ॥

---

1 ओखिलो–क, ख. ग
2 समन्वितः–च
3 भूरुद्रणा जङ्गमानां–क. ख. ग
4 केचित्काले–क. ख ग
5 ओखिलस्य–क. ख. ग
6 तुवचन–च

विगृहय त[1] महाश्रेष्ठं
ओहिलं[2] प्रति हे प्रिये ।
नृणां पुष्टिप्रदातव्यं
अन्नं पर्जन्यसम्भवम् ॥ १५९ ॥

तदन्नमोहिलस्यापि[3]
प्रसादमुखपूर्वकम्[4] ।
वीरमाहेश्वराणां च
प्रसादक्रियपूर्वकम् ॥ १६० ॥

इत्याह स्वर्गनाथोऽसौ[5]
अन्नमूलं[6] महत्करम् ।
जगतां बीजपूरस्थ
मेघवृन्दं निरोधयेत्[7] ॥ १६१ ॥

लयतप्ताग्निसंयुक्तान्
मेघराशिगतान् प्रिये !
द्वादशार्कांस्त[8]दाहूय
विसृज्य गगनान्तरे[9] ॥ १६२ ॥

---

1 विगृह्यकं–च
2 ओखिल–क. ख. ग
3 मोखिलस्यापि–क. ख. ग
4 क्रियापूर्वकम्–च
5 स्वर्गससौ–च
6 स्वर्गनदसावन्नमूलं--घ
7 न रोधयेत्–च
8 कास्त--क. ख. ग
9 सृजताम्बरमण्डले--घ. च

अवनीमध्यतोयानां
दाहकान् किरणानिति[1] ।
वापीकूपतटाकानि[2]
सप्तपातालभेदनैः ।
किरणैः कीलकोपेतैः
शोष्यन्ते ते मम प्रिये ॥ १६३ ॥

दुर्भिक्षं[3] जायते लोके[4]
ओहिलस्य[5] प्रभावतः ।
तद्देशं सम्पदोपेतं
नानाधान्यसमन्वितम्[6] ॥ १६४ ॥

भवतीत्याह देवेशः
इदं वचनमब्रवीम् ।
ओहिलस्य[7] महाभक्तिं
धूपशील समन्वितास्

वर्णितुं वासुदेवो वा
न समर्थो भवेत् किल ।

---

1 अवनिमध्यतोयानिकृत्यान्यपि—क. ख. ग
2 तटाकादीन् घ. च
3 दुर्भिक्ष—घ. च
4 लोहिकः—घ. च
5 औहिलस्य—क. ख. ग
6 तद्देशः सम्पदोपेतः
नानाधान्यसमन्वितः—घ.
7 ओखिलस्य—क. ख. ग

वीरमाहेश्वरस्यास्य[1]
ओहिलस्य तपोदयम् ॥ १६६ ॥

वर्णितुं ब्रह्मणोऽस्यापि
सानक्षीणं भवेत् किल[2] ।
तस्य प्रभावं तत्त्वं
शिवशीलव्रतान्वितम्[3] ॥ १६७ ॥

वर्णितुं यमदिक्पालाः
असमर्था भवन्ति वै[4] ।
इति चिन्ताकुलोपेतः
शौरिणं[5] वनमालिनम् ॥ १६८ ॥

शङ्खचक्रगदापद्म-
धारिणं श्रीपतिं हरिम् ।
इन्द्रो[6] ददर्श तं तस्य
ओहिलस्य[7] महात्मनः ।
प्रभावं प्रमथाचार-
शीलभक्तिसमन्वितम् ॥ १६९ ॥

---

1 वीरमाहेश्वराचार–क. ख. ग
2 ब्रह्मणस्यापि– ख. ग
3 अभूत् किल–घ.च
4 भवन्यहो–घ. च
5 शार्ङ्गिणं–घ. च
6 सेन्द्रः–क. ख. ग
7 ओखिलस्य–क. ख. ग

विस्तार्य हरिरिन्द्रस्तौ[1]
कीटकं प्राणकण्टकम् ।
कुर्वाते हि प्रिये गौरि[2]
ओहिलस्य[3] महात्मनः ॥ १७० ॥

पादमध्ये प्रतिष्ठाप्य
पेततुर्भुवनान्तरे ।
हर[4] शम्भो महादेव
विश्वेशामरवल्लभ ॥ १७१ ॥

भूरुद्रजङ्गमानां च[5]
धूपशीलव्रतं तव ।
अधीनमिति[6] तत्त्वज्ञः
रेणुकोऽप्या[7]गमान्वितः ॥ १७२ ॥

इत्याह भगवन् शम्भो
आह[8] कष्टं मम प्रभो !
दापयेत् केन पापेन
मायामोहधृतस्य मे[9] ॥ १७३ ॥

---

1 रिन्द्रौतौ–क. ख. ग
2 कुर्वावहे आवां गौरि–घ.च
3 औखिलस्य–क. ख. ग
4 हार–च
5 भूरुद्राणांजङ्गमानां–घ. च
6 अधीनाविति–क. ख. ग
7 रेणुकः आ–क. ख. ग
8 इत्याह–घ. च
9 मौह्ययुतस्य मे घ. च

हर[1] शम्भो महादेव
अनाथं[2] शरणागतम् !
धूपशील[3]व्रतमयं
मदनास्त्रविनाशनम् ॥ १७४ ॥

किमुपेक्ष्यसि हे स्वामिन् !
मां प्रतिग्रह[4] साधनम् ।
एतस्मिन्नन्तरे गौरि
यशस्वी पुल्कसाधमः[5] ॥ १७५ ॥

किरातो मृगयासक्तः
मृगबन्धनसाधकः ।
तमोहिलं[6] क्षतयुतं
धूपशीलसमन्वितम् ॥ १७६ ॥

ददर्श शांभवज्ञान-
योगिकेन जनेन मे[7] ।
पादमध्ये क्षतं तेऽपि
भस्मवेष्टनवेष्टितम् ॥ १७७ ॥

---

1 हार–च
2 अनाथ–च
3 देव ·िल–क. ख. ग
4 प्रतिग्राह–क. ख. ग
5 पुल्कसोत्तमः घ. च
6 तमोखिल–क. ख. ग
7 ज्ञानं ·ोगि·ां प्रत्युवाचभोः–घ. च

लभ्यते[1] तस्य तद्वाक्यं
श्रुत्वा लोकत्रयोत्तमः ।
ओहिलो[2] वेदवेदाङ्ग-
वेद्यो ब्रह्मर्षिसेवितः ॥ १७८

शिवव्रती [3]प्राणलिङ्गी
प्रसादब्रह्मसेवितः[4] ।
भस्माहारो [5]बलयुतः[6]
प्रत्युवाच किरातकम् ॥ १७९

तस्य तद्वचनं[7] श्रुत्वा
किरातो धर्ममानसः ।
आत्मचिन्तां[8] भक्तियुतां[9]
धत्से ते त्वं महाव्रत[10] ॥ १८०

---

1 लभते वा--घ- च

2 ओखिलो--घ

3 शीलव्रती--घ. च

4 भावितः--घ.च

5 भस्माहार--घ

भस्माहार--च

6 बलायुतः--च

7 इति तस्यवचः--घ.च

8 आत्मोचितां घ .च

9 भक्तिमेतां--घ. च

10 धत्ते तेहिप्रिये शुभे--क. ख. ग

किराता ऊचुः—[1]

हे स्वामिन् देवताः सर्वाः[2]
भवन्तं मत्वा[3] प्राधमम् ॥
विमृश्य यास्यति स्थिरः
मोचयित्वाऽऽशु[4] कण्टकम् ॥ १८१ ॥

तत्र पादतले क्रूरं
जग्मतो निश्चयो भवेत्[5] ॥
तस्य तद्वचनं[6] श्रुत्वा
ओहितो[7] वसुधातले ॥ १८२ ॥

आहूय देवताः सर्वाः
यमलोकमनीनयत् ॥
एतस्मिन्नन्तरे काले
रेणुकाद्याः समागताः ॥ १८३ ॥

पुष्पवृष्टिं चक्रुः सर्वे
मारुताः दक्षिणागताः[8] ॥

---

1 इदं वाक्यं नास्ति—ख. च
2 सर्वे—क. ख. ग
3 त्वां प्रतितत्य—क. ख. ग
4 विमृश्य मध्ये सुरसौमैः कण्टकं लोकभयङ्करम्—क. ख. ग
5 जग्मतुर्दुःखबुद्धितः—क. ख. ग
6 तस्योक्तिवचनं—ख. च
7 तो निहितो—क. ख. ग
8 मारुतो दक्षिणागतः—क. ख. ग

तस्य मूर्ध्नस्तले[1] गौरि !
आच्छाद्य रविरश्मयः ॥ १८४ ॥

ओहिलं[2] तत्त्वनिपुणं
वेदमूर्ध्निप्रतिष्ठितम् ।
बाधां[3] कुर्वन्ति तं श्रेष्ठं
इति तत्त्वार्थपारगाः ॥ १८५ ॥

हेरम्बषण्मुखमुखाः[4]
प्रमथाः ब्रह्मसेविताः ।
आहुमें[5] निकटं गत्वा
रोपावेशमनोरताः[6] ॥ १८६ ॥

तस्यार्कस्य[7] मनोवृत्तं
लक्षयोजनमायुतम्[8] ।
अग्नितत्त्वं[9] नवदलं
सौरबिम्बं वरानने ॥ १८७ ॥

---

1 मूर्ध्नितले—क. ख. ग.
मूर्धस्थले—च
2 ओखिल—क. ख. ग
3 बोधं—च
4 षण्मुखास्सर्वे—क. ख. घ
5 आहुहे—च
6 मनोद्भवाः—क. ख. ग
मनोरथाः—घ
7 तस्यार्थस्य—च
8 मायुक्तं—क. ख. ग
मायकं—च
9 अग्नितम—क. ख. ग

शिशुमारो गणश्रेष्ठः[1]
गलितुं क्रोधभावतः[2] ।
मनोऽधत्तेति तान्[3] सर्वान्[4]
गणान् प्रति सुराधिपः[5] ॥ १८८ ॥

शस्त्र[6]वृष्टिंलोकहन्ता[7]
ववर्ष वसुधातले ।
वीरमाहेश्वराणां च
विरोधं वीर्यनाशनम्[8] ॥ १८९

देवतानां समाजेषु
सिद्धिर्भवति तादृशी[9] ।
शस्त्र[10]वृष्टिं ऋषिश्रेष्ठः[11]
रेणुकः तत्त्वपारगः[12] ॥ १९० ॥

---

1 तं मण्डलं शिशुलमारो-घ. च
2 भावितः-च
3 धत्तेऽर्तान्-घ
4 मनो दत्तेति ताः सर्वाः
5 सुराधिपान्-च
6 अस्त्र-घ. च
7 लोकहता-ग. घ.
8 विरोधो वीर्यनाशनः-घ. च
9 तादृशम्-क' ख.
10 अस्त्र-स्त्र. च
11 विलोक्याशु-घ. च
12 सत्त्वभावितः-घ. च

भस्मी[1]करोति मे[2] कान्ते !
जघानैन्द्रं[3] शरासनम् ।
बबन्ध[4] नागपाशेन
जलमध्ये विनिक्षिपेत्[5] ॥ १९१ ॥

ब्रह्मास्त्रेण[6] रवेर्बिम्बं
जघानाशु[7] वरानने ।
घण्टाकर्णो नखाग्रेण[8]
विष्णुलोकं सुरान्वितम् ॥ १९२ ॥

चिच्छेद मे प्रिये गौरि !
ब्रह्माणं ध्यानपूर्वकम्[9] ।
सत्यलोकाधिपं श्रेष्ठ[10]
सत्यज्ञानविवर्जितम् ॥ १९३ ॥

---

1 भस्मं—च
2 हे—घ
3 नैन्द्र—क. ख. ग
4 सम्बध्य—घ. च
5 तं न्यक्षिपत्—च
तं निक्षिपेत्—च
6 शिंशुमारः—घ. च
7 जघानाशं—क. ख. ग
8 नखाग्रेग मनोक्रोधात्—क. ख
9 गजकर्णोऽपिब्रह्माणे
स्वात्मगर्वितम्—घ. च
10 सत्यलोकं परिभ्राम्य—च

जलमध्ये प्रतिष्ठाप्य
ओहिलं[1] तत्त्वपारगम् ।
आरुह्य पुष्पकं दिव्यं
रुद्रकन्य(ा)समुद्भवम् ॥ १९४ ॥

ब्रह्माण्डकटहादूर्ध्वं
रेणुकेन महात्मना[2] ।
भूयते मे प्रिये[3] गौरि !
इदं सत्यं वदाम्यहम् ॥ १९५ ॥

तदारभ्य सुरस्तोमाः[4]
प्रमथांस्तत्त्वपारगान् ।
सेवयन्ति मम प्रीत्या
विष्णुब्रह्मेन्द्रदेवताः ॥ १९६ ॥

चारित्रेण च को युक्तं[5]
इतिहासं सुविस्मितम्[6] ।
महात्मनः तस्य कृतं[7]
धूपशीलसमन्वितम् ॥ १९७ ॥

---

1 ओखिळ्–क. ख. ग

2 रेणुकः प्रमथैः सह–घ
रेणुकैः ,, –च

3 प्राप ते शृणु हे–घ
प्राप्यते ,, –च

4 सुराः सर्वे–घ
सदा ,,–च

5 ओहिलाराध्यचरितं–घ- च

6 पठन्ति ते–घ



7 कृतिं–घ च

पठन्ति[1] ये जनाः सर्वे
दृढभक्तिसमन्विताः ।
वीरमाहेश्वराणां च
दीक्षाकाले दिने दिने ॥ १९८ ॥

ते यान्ति मम सायुज्यं
प्राप्नुवन्ति न संशयः[2] ।
इति मन्त्रेण तद्रूपं
प्राणलिङ्गेषु[3] भक्तितः ॥ १९९ ॥

दत्त्वा सर्वगुणोपेतं
पीठमध्ये प्रतिष्ठितम् ।
शक्तिगोलकसंयुक्तं
पञ्चसूत्रसमन्वितम् ॥ २०० ॥

अष्टबन्धान्वितं सूक्ष्मं
कन्थासीनं[4] सुरार्चितम् ।
सव्यहस्ते प्रतिष्ठाप्य
रुद्रसूक्तेन[5] भक्तितः ॥ २०१ ॥

दत्त्वा सर्वगुणोपेतं
पीठमध्ये प्रतिष्ठितम् ।

---

1 पठन्ते–क. ख. ग

2 गौरि चात्र न संशयः–घ. च

3 प्राणलिङ्गाय–घ. च

4 कथाशीलं–घ

5 लिङ्गसूक्तेन–घ. च

शक्तिगोलकसंयुक्तं
पञ्चसूत्रसमन्वितम्[1] ॥ २०२ ॥

आचार्यो मन्त्रवीर्येण[2]
पूजयेत् तत्त्वपारगः ।
ऋत्विग्भिः सह मन्त्रेण
गोघृतेन समन्वितम् ॥ २०३ ॥

दीपं कर्पूरसंयुक्तं
नववर्तिसमन्वितम् ।
दत्त्वा प्रदक्षिणं कृत्वा
आचार्यं तत्त्वपारगम्[3] ॥ २०४ ॥

पूजयेत् तत्त्वभावेन
धारयेत् तां महाव्रताम् ।
दीक्षां माहेश्वरोपेतां
निशाकाले[4] जितेन्द्रियः ॥ २०५ ॥

पादोदकप्रसादेन
पवित्रेण समन्वितः ।
गुरोः कराब्जसम्भूतः[5]
मन्त्रकायो[6] वरानने ॥ २०६ ॥

---

1 इद पद्यं—घ. पुस्तके नदृश्यते ।
2 आचार्यमन्त्र—क. ख. ग
3 आचार्यस्तत्त्वपारगः—घ. च
4 निशि काले—क. ख. ग
5 कमलसम्भूतः—क. ख. ग
6 मन्त्रकामो—क. ख ग

अहं भवामि मे प्रीत्या
गुरोर्वेदान्तपारगात्[1] ।
आज्ञां गत्वा[2] महाशीलं
पादोदकसमन्वितम् ॥ २०७ ॥

प्रसादतत्त्वनिरतं
प्राणलिङ्गप्रतिष्ठितम् ।
भक्तिक्रियाज्ञानरूपं
यो लभेत् [3]ब्रह्मसेवितः ॥ २०८ ॥

स भवेन्मम सायुज्यं
याति सत्यं वरानने ॥ २०९ ॥

समस्तसम्पत्समवाप्तिसाधनं
महेश्वरप्राणयुतं मनोहरम् ।
पादोदकं मन्त्रयुतं गुरूणां[4]
माहेश्वराचारकृतं नरोत्तमाः[5] ॥ २१० ॥

ये सर्वदा भाववशैक[6]चेतनात्[7]
तत्त्वात्मकं पावनमन्त्रबीजम् ।

---

1 पारगम्–क. ख. ग
2 कृत्वा–क. ख. ग
3 भवेत्–क. ख. ग
मम–घ, च
4 प्रसादं–घ
5 नरोत्तमः–च
6 वश्यैक–क. ख.
7 चेतना–च

वहन्ति लोके वदनस्थितं गुरोः
विराजमानं विपुलं यथा तथा ॥ २११ ॥

मन्त्राक्षरन्यासमनोहरां परां
षडक्षरीं वेदशिखां वरानने !
ये मानवाः सन्ततमन्त्रमातरं
वहन्ति लोके प्रमथोत्तमाः सदा[1] ॥ २१२ ॥

भवन्ति तैः तत्त्वजनोत्तमैः शुभैः[2]
विज्ञानमानन्दशुभान्वितं परम् ।
ममान्तिकं विष्णुविवर्जितं प्रिये
ब्रह्मेन्द्ररुद्रानलभद्रसेवितम् ॥ २१३ ॥

कृतं सुराणां समरे विनाशनं
मनोभवं[3] ज्ञानवशं सुखान्वितम् ।
वेदान्तवेद्यं जगतां जयोत्करं
कैलासवासं ककुदस्थिते[4] प्रिये ॥ २१४ ॥

वीरमाहेश्वराणां च
दीक्षां मोक्षार्थसाधिकाम् ।
कांक्षन्ति प्रमथाः सर्वे
न कांक्षन्ति जनाधमाः ॥ २१५ ॥

---

1 प्रमथा भवेयुः–घ च
2 भवन्ति सत्त्वजनाः शुभाः– . च
3 मनोद्भवं–क. ख ग
4 ककुदस्थितं–च

दीक्षाहीनं नरं गौरि !
प्राकृतं जडदेहिनम् ॥

अग्निसंस्कारसंयुक्तं
विप्रगोत्रोद्भवं प्रिये[1] !
प्रेतलिङ्गाङ्कितं देहं[2]
पीठपूजासमन्वितम्[3] ॥ २१६ ॥

पञ्चसूतकसंयुक्तं
प्राणलिङ्गविवर्जितम् ।
पादोदकेन विरतं[4]
प्रसादेन बहिष्कृतम् ॥ २१७ ॥

गूढपापसमासक्तं
भस्मीकुर्वन्ति[5] मानवाः[6] ।
तप्तसंस्कारसंयुक्तं
ऊर्ध्वपुण्ड्रसमन्वितम् ॥ २१८ ॥

चतुर्वेदधरं विप्रं
दृष्ट्वा तं मानवाधमम्[7] ।

---

1 ऋषिगोत्रसमुद्भवम्–घ
2 पीठलिङ्गाङ्कितनुम्–घ
,, तनुः–च
3 समन्वितः–च
4 रहितं–घ. च
5 भस्म कुर्वन्ति–घ
6 नारकाः–घ
7 दृष्टास्मानं नराधमम्–घ.च

ये च्छेदयन्ति मे प्रीत्या
दीक्षाकाले शुभान्विते ॥ २१९ ॥

ते यान्ति मम सायुज्यं
सत्यं सत्यं वदाम्यहम्[1] ।
द्विजाधमं तप्तमुद्रा[2]-
तप्तलाञ्छनवेष्टितम् ॥ २२० ॥

दीक्षाकाले प्रिये गौरि[3] !
दृष्ट्वा[4] शैवकुलोद्भवाः ।
न ताडयन्ति मे प्रीत्या
ते यान्ति यममन्दिरम् ॥ २२१ ॥

द्विजेभ्यो भक्तिभावेन
दीक्षाकाले नराधमाः ।
दापयन्ति सदा[5] गौरि
ते यान्ति यममन्दिरम् ॥ २२२ ॥

हस्तमस्तकसंयोगां[6]
वीरमाहेश्वरीं कृताम् ।

---

1 वदाम्यये–घ. च
2 तप्तमुद्र–क. ख. ग
3 हैमवति–घ. च
4 वीर–घ
5 धनं–घच
6 संयोग–घ

गुरोः कराब्जसम्भूतां[1]
अद्वैतब्रह्मसाधिकाम्[2] ॥ २२३ ॥

तां दीक्षां मानवाः सर्वे
ऋषिगोत्रसमुद्भवाः ।
मोहबुद्ध्या पापयुताः
निन्दन्ति वसुधातले ॥ २२४ ॥

ते यान्ति रौरवं घोरं
यावच्चन्द्रदिवाकरौ[3] ।
वीरमाहेश्वरादन्यत्[4]
नास्ति वेदत्रये प्रिये ॥ २२५ ॥

वीरमाहेश्वरं श्रेष्ठ-
मिति वेदऋचः सदा ।
स्तोत्रं कुर्वन्ति हे गौरि !
को वा निन्दां करोति ह[5] ॥ २२६ ॥

वीरमाहेश्वराधीनं
कैलासं जन्मवर्जितम् ।

---

1 कमकसम्भूतां—क. ख. ग
2 साधकाम्—क ख. ग
3 दिवाकरं—घ
4 दन्या—च
5 यमू—क. ख. ग
ह्ना—घ

इत्याहुः ऋषयः सर्वे
रेणुकाद्याः पुरातनाः ॥ २२७ ॥

धर्मशास्त्रपुराणानि
ब्रह्म[1]विष्णुव्रतान्यपि ।
वीरमाहेश्वरं शान्तं
त्यक्त्वा ब्रह्मर्षयः सदा ॥ २२८ ॥

स्तोतुं तत्त्वसमोपेताः
कांक्षन्ति गगनान्तरे ।
इत्याहुर्वेदमन्त्राणि[2]
इदं सत्यं वरानने ॥ २२९ ॥

भूरुद्र[3]जङ्गमं श्रेष्ठ
भुवनेषु बुधोत्तमः[4] ।
तत्तत्त्वं तत्त्वराजानं
वीरमाहेश्वरान्वितम्[5] ॥ २३० ॥

बोधयामि सदा गौरि
शृणु भक्तिसमन्विते ।

---

1 मोह–क. ख. ग

2 वेदमन्त्राढ्याः–घ. च

3 भूरुद्रं–घ. च

4 बुधोत्तमाः–घ

5 [illegible]

वीरमाहेश्वराणां च
ललाटेषु गणाधिपाः[1] ॥ २३१ ॥

आवासयन्ति सततं
इत्याहुर्मन्त्रदेवताः ।
तेषां मूर्ध्नस्तले [2]गौरि !
वेदा[3]नामावलिस्सदा ॥ २३२ ॥

आवासयामास चेति[4]
स्मृताः[5] तत्त्वार्थपारगाः ।
भूरुद्राणां जङ्गमानां[6]
जटाजूटे गणाधिपाः ॥ २३३ ॥

वासयामास मे प्रीत्या
सत्यं सत्यं वदाम्यहम् ।
भूरुद्राणां जङ्गमानां[7]
जिह्वामूले स्वराधिपाः ॥ २३४ ॥

डिण्डिमा रविडिम्बाद्याः
व्यञ्जनाक्षरनायकाः[8] ।

---

1 बुधोत्तमाः—घ. च
2 मूर्ध्नितले—क. ख. गमूर्ध्नस्तले—च
3 वेद—च
4 मास इति—ख.क. ग
5 तत्त्व—क. ख. ग
6 भूरुद्रजङ्गमानां च—क. ख. ग
7 भूरुद्रजङ्गमानां च—घ.च
8 द्याध्यक्षखण्डपुरस्कृताः—क. ख ग

कमलाश्रमुखाः सर्वे[1]
वासं कुर्वन्ति हे प्रिये ॥ २३५ ॥

भूरुद्रजङ्गमानां च[2]
भुजेषु बुधपीडिताः ।
असिताङ्गो गुरुश्चण्ड[3]-
क्रोध उन्मत्तभैरवः ॥ २३६ ॥

आवासयन्ति सततं
लयकोटिप्रभायुताः ।
वीरमाहेश्वराणां च
हृन्मध्येषु[4] शुभान्विताः ॥ २३७ ॥

मोक्षलक्ष्मीः सदा गौरि !
आवासं आस हे प्रिये ! (?)
भूरुद्राणां जङ्गमानां[5]
नाभौ तिष्ठन्ति वायवः ॥ २३८ ॥

तेषां कोटितले रुद्राः
तिष्ठन्ति सुरपूजिताः ।
वीरमाहेश्वराणां च
पृष्ठेषु ऋषयः सदा ॥ २३९ ॥

[1] 'सर्वे' इति नास्ति—क. ख. ग
[2] भूरुद्राणां जङ्गमानां—घ च
[3] असित ङ्गो रुश्चण्ड—क. ख. ग
असितारुरुश्चण्ड—च
असिताङ्गागुरुश्चण्डः—च
[4] हृदयाब्जे—घ. च
[5] भूरुद्रजङ्गमानां च—क. ख. ग

तिष्ठन्ति मम भक्त्या च
सत्यं सत्यं वदाम्यहम् ।
वीरमाहेश्वराणां च
गुह्यमध्येषु सागराः ॥ २४० ॥

आवासयन्ति सततं
सत्यं सत्यं वदाम्यहम् ।
वीरमाहेश्वराणां च
ऊरुमध्येषु पर्वताः ॥ २४१ ॥

तिष्ठन्ति मे[1] प्रिये गौरि !
तेषां भक्तिमती शृणु[2] ।
वीरमाहेश्वराणां च
ऊरुमूलेषु शाम्भवाः ॥ २४२ ॥

आवासयन्ति सततं
सत्यज्ञान[3] निरञ्जनाः
भूरुद्राणां जङ्गमानां[4]
जङ्घासु[5] गुरुपूजिताः ॥ २४३ ॥

हेरम्बस्कन्दवीराद्याः
प्रमथास्तत्त्वपारगाः ।

---

[1] हे—क. ख. ग
[2] तेषां भक्तिसमन्विते—क. खग
[3] नित्यज्ञान—घ. च
[4] भूरुद्रजङ्गमानां च-क. ख. ग
गुल्फेषु—क. ख. ग.

आवासयन्ति सततं
शृणु भक्तिसमन्विते[1] ॥ २४४ ॥

भूरुद्राणां जङ्गमानां[2]
गुल्फेषु[3] जनसेविताः ।
अग्निष्वात्तादिपितरः
तिष्ठन्ति[4] सर्वदा प्रिये ॥ २४५ ॥

भूरुद्राणां जङ्गमानां
पादमध्येषु पार्वति ।
गङ्गाद्याः सर्वदा नद्यः
तिष्ठन्ति स्वस्वरूपकाः ॥ २४६ ॥

वीरमाहेश्वराणां च
नखमध्येषु नाकिनः ।
आवासयन्ति सततं
ध्रुवं गौरि ! वरानने[5] ! ॥ २४७ ॥

तेषां पादतले विष्णुः
ब्रह्मसूर्यादिसेवितः[6] ।

1 भक्तिमति प्रिये—घ. च
2 भूरुद्रजङ्गमानां च—क. ख. ग
3 जङ्घेषु—क. ख. ग
4 तिष्ठन्ते—क. ख. ग
5 भूरुद्रजङ्गमानां च—क. ख. ग
5 गौरि विचार्यय:—घ
विचारय—च
6 विष्णु.... सेविताः—च

वासं करोति मे प्रीत्या
रमाभार्यासमन्वितः[1] ॥ २४८ ॥

पादाग्रे वाक्पतिस्तेषां
तिष्ठेत् तत्त्वव्रतान्वितः[2] ।
पादपृष्ठेषु हे गौरि !
ब्राह्मीमुख्यास्तु मातरः[3] ॥ २४९ ॥

आवासयन्ति सततं
शुद्धसात्त्विकभावतः ।
[4]वीरमाहेश्वराणां च
रोमकूपेषु सर्वदा ॥ २५० ॥

ब्रह्माण्डततयः सर्वाः
तिष्ठन्ति बुधसेविते !
त्वङ्मध्येषु सदा गौरि !
तेषां वेदविदां प्रिये ! ॥ २५१ ॥

वालखिल्यादिऋषयः
वासं कुर्वन्ति भक्तितः ।

[1] रमारमणिसेवितः–क. ख. ग

[2] व्रतान्विते–क. ख. ग

[3] मातृगौः भागःब्रह्मपूर्विकाः–क. ख. ग

[4] इत आरभ्य "बुधसेविते" इत्यन्तः भागः उत्तरत्र "चम्पकनासिके" इति पद्यानन्तरं–घ. च.
पुस्तकयोः दृश्यते ।

चर्मकेशेषु[1] हे गौरि !
शेषानन्तपुरस्कृताः ॥ २५२ ॥

सरीसृपाः सदा[2] तेषां
तिष्ठन्ति जयकांक्षिणः
गन्धर्वाः किन्नराः सर्वे
तेषां मज्जान्तरेषु च[3] ॥ २५३ ॥

वीरमाहेश्वराणां च
अस्थिमध्येषु दानवाः ।
वासं कुर्वन्ति सततं
अहो पीनपयोधरि[4] ॥ २५४ ॥

वीरमाहेश्वराणां च
रुधिरेषु सुरोत्तमाः ।
उन्मज्जयन्ति सततं
चित्रं चम्पकनासिके[5] ॥ २५५ ॥

---

1 चर्ममध्येषु–क. ख. ग

2 तदा–क. ख. ग

3 मज्यान्तरेषु मे–क. ख. ग
मज्जान्तरेषु ये–घ
इतः परं च-पुस्तके
'आवासयन्ति सततं शृणु
भ्रुकुटिविभ्रमे । इत्यधिकं दृश्यते।

4 पयोधरे–च. घ

5 वासिके–क. ख. ग
'वीर' 'वीर, इमौ श्लोकौ च पुस्तके पौर्वापर्येण वर्तेते ।

देवदेव जगन्नाथ
लोकाभीष्टप्रदायक[1] ।
वीरमाहेश्वराणां च
कवचं मोक्षप्रदायकम् ॥ २५६ ॥

नृणां भक्तिकरं दिव्यं
भूतप्रेतविनाशनम् ।
ज्वरक्षयकरं श्रेष्ठं
वक्तुमर्हसि हे[2] प्रभो ॥ २५७ ॥

अहं वा शिशुमारो वा
रेणुको वा सनातनः[3] ।
षण्मुखो वा इदं पुण्यं[4]
कवचं मोक्षदायकम् ॥ २५८ ॥

वहेयुर्न्या[5] समन्त्रेण[6]
शृणु त्वं[7] मत्सलोचने ।
पादौ महेश्वरः पातु
पादमध्ये सुराधिपः ॥ २५९ ॥

---

1 फलप्रद–च
2 मे–च
3 वा गजश्रुतिः–घ
वा गजाश्रुतिः–च
4 घण्टाकर्णः षण्मुखो वा–घ. च
5 वहेमेन्या–घ. च
6 न्य यमन्त्रेण–क. ख
7 वहत्वं–घ. च

पादाग्रे जङ्गमः पातु
रक्ष मां करुणाकर[1] !
गुल्फे गुरुः सदा पातु[2]
जङ्घे भक्तमुखोद्भवाः ॥ २६० ॥

रक्ष रक्ष सुरश्रेष्ठ
ऊरू मे करुणाकरः ।
कटिं मे कामसंहारी[3]
पातु मे तत्त्वसागरः ॥ २६१ ॥

गुह्यं पातु सदानन्दः[4]
ध्यानगम्यो जगत्पतिः[5] ।
मेढ्रं महेश्वराचार-
वीरव्रतसमन्वितः ॥ २६२ ॥

पायुं मे पातु सततं[6]
नाभिं रक्ष कृपानिधे ।
उदरं पातु मे स्वामी[7]
वीरमाहेश्वरः शिवः[8] ॥ २६३ ॥

---

1 करुणाकरः—घ. च
2 गुल्फौ गुरो सदा पाहि—घ. च
3 कामसंहारः—क. ख. ग
4 सदानन्द—क. ख. ग
5 ममाण्डं जगतां पतिः—घ. च
ध्यानगम्यो जगत्पितः—क. ख
6 पातु मे पापसंहार—क. ख. ग
7 स्वामिन्—क. ख. ग.
8 षण्डिकां मे शिवोऽवतु—घ. च

हृदयं पातु सर्वज्ञः[1]
प्राणलिङ्गप्रतिष्ठितम्[2] ।
स्तनौ रक्ष सुरश्रेष्ठ
देवदानवपूजित[3] ॥ २६४ ॥

कण्ठं मे पातु विश्वेशः[4]
वेदमूर्ध्नि प्रतिष्ठितः[5] ।
कक्षौ मे कालसंहारः[6]
पातु चन्द्रशिखामणिः[7] ॥ २६५ ॥

बाहू मे पातु पापघ्नः[8]
पञ्चसूतकवर्जितः[9] ।
करौ पातु सदानन्द-
ध्यानधारणधार्मिकः[10] ॥ २६६ ॥

---

1 सततं–घ· च
2 प्रतिष्ठितः–क· ख. ग
3 पूजितः–च
4 विश्वश
5 प्रतिष्ठित–क. ख. ग
प्रतिष्ठितम्–च
6 सहार–क. ख. ग
7 शिखामणे–क. ख, ग
8 बाहू मम भुजौ पातु–घ- च
9 बाहू मेपातु पाप घ्न–क. ख
10 वर्जित–क. ख. ग
10 धार्मिक–क. ख, ग.

प्रकोष्ठे[1] मे प्राणनाथः[2]
प्रणवब्रह्मसाधकः ।[3]
मणिबन्धौ मामायह-
लीलानाटकविग्रहः[4] ॥ २६७ ॥

पातु मे जगतां स्वामी[5]
तत्त्वसाधनसाधकः[6] ।
चुबुकं पातु मे विद्वान्
मन्त्रकायमनोहरः[7] ॥ २६८ ॥

वक्त्रं मे पातु वेदान्त-
वेदगम्यः सदाशिवः[8] ।
जिह्वां मेरक्षत्वक्षघ्नः[9]
यक्षदानवसेवितः[10] ॥ २६९ ॥

---

1 कूर्परौ–घ
कूर्परे–च
2 प्राणनाथ–क. ख. ग
3 साधक–क. ख. ग
4 विग्रह–क. ख. ग
5 स्वामिन्–क. ख. ग
6 चाङ्गुलीस्तत्त्वसाधकः–घ
7 ग्रीवां विद्वान् मन्त्रकायः
चुबुकं सर्वदाऽवतु–घ
चुम्बकं ,, –च
8 वेदगम्यसदाशिव–क. ख. ग
9 रक्ष रक्षोघ्नं–क. ख. ग
रक्षत्वघ्नोऽय–च
10 सेवित–क. ख. ग

रदनान् पातु मे स्वामी[1]
सर्व[2]शीलसमन्वितः[3] ।
अधरं पातु मे विद्वान्
[4]विलयस्थितिवर्जितः ॥ २७० ॥

ओष्ठं मे प्रमथाचारः[5]
दन्तमूलं तु निर्भ्रमः[6] ।
दन्ताग्रमीषणध्वंसः[7]
भ्रुवौ मे[8] पातु शङ्करः[9] ॥ २७१ ॥

भ्रूमध्यं विश्वजनकः[10]
पातु मे पार्वतीप्रियः[11]
ललाटं पातु मे स्वामी
प्रसादब्रह्मसाधकः[12] ॥ २७२ ॥

---

1 रदनाः पातु हे स्वामिन्–क. ख. ग
2 वर्श–घ
3 समन्वित–क. ख. ग
4 'विश्व' इति अधिकं–घ
5 चार–क. ख. ग
6 भ्रमनिर्मोहनाशन–क. ख. ग
7 ईषणत्रयविध्वंस–क. ख. ग
8 भ्रवौ, च–क. ख. ग
शङ्कर–क, ख. ग
जनक–क. ख. ग
11 प्रिय–क. ख. ग
12 घ–शङ्क ब्रह्मप्रसादकः

शिरः पातु शिवध्यान-
मन्त्रतन्त्राक्षरान्वितः[1] ।
पातु पृष्ठं पवित्राङ्गः[2]
पञ्चब्रह्मपितामहः[3] ॥ २७३ ॥

त्वचं मे पातु पापघ्नः[4]
कुण्डलीधारधार्मिकः[5] ।
चर्म मे पातु चण्डाग्निः[6]
कोटिसूर्यप्रभान्वितः[7] ॥ २७४ ॥

मांसं मे पातु सर्वज्ञः[8]
रसं पातु दवीदवः[9] ।
रुधिरं पातु मे रुद्रः[10]
जपमालासमन्वितः[11] ॥ २७५ ॥

मेदो मे पातु षट्त्रिंश-
तत्त्वशोधनदीपकः[12]

---

1 न्वित–क. ख. ग
2 त्राङ्ग–क. ख. ग
3 कङ्कालं ब्रह्मणोऽङ्गकः–घ
4 पापघ्न–क. ख. ग
5 धार्मिक–क. ख. ग
6 चण्डाग्नि–क. ख. ग
7 रोमकोटिरविप्रभः–घ
8 हे स्वामिन्–क. ख. ग
9 पापारण्यदवानल–क. ख. ग
10 रुद्र–क. ख. ग मम रुद्राक्षः–घ
11 जपमालाकरोऽवतु–घ
12 दीपक–क. ख. ग

मज्जां मे रक्ष[1] दाक्षाग्नि[2]-
नाशनत्रयलोचन[3] ॥ २७६ ॥

वसां पातु मदद्वन्द्व-
मायामिथ्याविनाशनः ।
अस्थि मे सर्वनाकेन्द्र-
स्तूयमानपदाम्बुजः[4] ॥ २७७ ॥

वामभागं मनः सूत्रं[5]
लयदीपकसाधनः[6] ।
ममाव्यान्मन्त्रलंन्य च
तन्त्रसाधनदूषितः ॥ २७८ ॥

सव्यं पायान्मम सदा
आत्मानन्दपरायणः[7] ।
प्राचीं दिशं च मे पातु
सर्वब्रह्माण्डनायकः[8] ॥ २७९ ॥

---

[1] रक्षतु–घ
[2] दक्षाग्नि–क. ख. ग
[3] लोचनः–घ
[4] अस्थीनि पातु मे स्वामिन्
पदद्वन्द्वविराजित–क. ख. ग
[5] मनोसूत्र–क. ख. ग
[6] साधन–क. ख. ग
[7] सव्यं मे पातु सर्वज्ञ
आत्मानन्द सदाशिव ॥ क. ख. ग
[8] प्राचीदिश मे दिव्याङ्ग
रक्ष ब्रह्माण्डनायक–क. ख. ग

आग्नेयीं ककुभं पातु
दक्षाध्वरहरो मम ।
दक्षिणां हि दिशं पातु
मम पञ्चाननप्रभुः[1] ॥ २८० ॥

वारुणीं तु दिशं पातु[2]
मम माधवसेवितः[3] ।
नैर्ऋतिं[4] पातु कर्माब्धि-
बाडबानलतैजसः[5] ॥ २८१ ॥

वायवीं पातु भूरुद्रः[6]
मम प्राणप्रदायकः[7] ।
उत्तरां ककुभं पायात्[8]
ऊर्ध्वरेता इति स्मृतः[9] ॥ २८२ ॥

---

[1] आग्नेय मे कुलगुरो
रक्ष दक्षाध्वरोहर !
दक्षिणायां दिशं मेऽपि
पातु पञ्चाननप्रभो—क. ख. ग

[2] वरुणायां दिशं स्वामिन्—क. ख. ग

[3] सेवित—क. ख. ग

[4] नर्ऋत्यां—क. ख. ग

[5] तेजस—क. ख. ग

[6] वायव्यां पातु भूरुद्र—क. ख. ग

[7] प्रदायक—क. ख. ग

[8] उत्तरस्यां दिश पातु—क. ख. ग

[9] [illegible]—क. ख. ग

दिग्भीशान[1]संयुक्तां
पातु मे पादपद्मकः[2] ।
ऊर्ध्वं पायान्मम सदा[3]
पिङ्गकेशजटाधरः[4] ॥ २८३ ॥

पातालं मम सर्वत्र
पायात्पातालमन्दिरः[5] ।
सर्वाङ्गं पातु सर्वेशः
चक्रराजजनाधिपः[6] ॥ २८४ ॥

इदं पवित्रं पापघ्नं
कवचं मन्त्रनायकम् ।
षट्त्रिंशत्तत्त्वनिलयं
षडङ्ग[7]न्यासवेष्टितम् ॥ २८५ ॥

रोगघ्नं रोगिणां लोके
योगिनां मोक्षदायकम् ।
नृणां [8]भक्तिप्रदातव्यं
क्षयापस्मारनाशनम् ॥ २८६ ॥

---

[1] मीशान्य–क. ख. ग
[2] पद्मक–क. ख. ग
[3] ऊर्ध्वं मे रक्ष दिव्याङ्ग–क. ख. ग
[4] धर–क. ख. ग
[5] पातालं पातु मे स्वामिन्
सर्वव्यापिन् सदाशिवः । क. ख. ग
[6] सेर्वेश चक्रराजन् जनाधिप–क. ख. ग
[7] चम्पक–क. ख. ग
भुक्ति–घ
[8] मुक्ति–ग

भक्तानां भक्तिनिलयं
चतुर्वर्गप्रदायकम् ।
विरक्तानां विरामस्थं
नृपाणां जयवर्धनम् ॥ २८७ ॥

व्रतिनां[1] व्रतदं शुद्धं
भूतप्रेतविनाशनम् ।
देवतानां समाजेषु[2]
भीमविक्रमवेष्टितम्[3] ॥ २८८ ॥

गन्धर्वाणां समाजेषु
गानस्वरसमन्वितम् ।
प्रमथानां समाजेषु
मन्त्रबीजाक्षरान्वितम्[4] ॥ २८९ ॥

वीरागमसमोपेतं
वीर्यवृद्धिप्रदायकम् ।
प्रत्यर्थिनां समाजेषु
प्राणभेद्यं विजृम्भितम् ॥ २९० ॥

कान्ताजनानां वैचित्र्यं
विभ्रमं ललितं तथा ।

---

1 व्रतीनां—क. ख. ग
2 सम्पूज्येषु—च
3 वेष्टितः—च
4 समन्वितः—घ. च

उद्वहन्तं प्रियं[1] गौरि
सांख्ययोगविवर्जितम् ॥ २९१ ॥

वेदावासं[2] स्वरमथ
जन्मसंसारवर्जितम् ।
वीरमाहेश्वराणां च
दीक्षाकाले मम प्रिये ॥ २९२ ॥

ये पठन्ति मम[3] प्रीत्या
ते यान्ति मम मन्दिरम् ।
कवचं न्यासयेद्यस्तु
दीक्षाकाले दिने दिने ॥ २९३ ॥

तस्य दीक्षाफलं प्राप्तं
सर्वागमसमन्वितम् ।
कवचं मन्त्रराजानं
पाठयेत् तत्त्वपारगः ॥ २९४ ॥

स याति मम सायुज्यं
सत्यं सत्यं वदाम्यहम् ।
तस्य प्रभावात् सर्वे ते
तृणीकृतपुरन्दराः[4] ॥ २९५ ॥

---

1 उद्वहत्तत्प्रियं–च
प्रिये-क. ख. ग
2 वेदवासं–घ. च
3 महा–क. ख. ग
4 पुरन्दरः–घ. च

वीरमाहेश्वराः देवि[1]
व्रतं दधति हे प्रिये !
अर्धरात्रौ दिनस्यार्धे[2]
पूर्वाह्णे वा[3] दिने दिने ॥ २९६ ॥

एकवारं त्रिवारं वा
पञ्चवारं तथैव च[4] ।
ये पठन्ति मम[5] प्रीत्या
यान्ति कैलासमुत्तमम् ॥ २९७ ॥

गङ्गास्नानफलं नृणां
कवचं दापयेत् सदा ।
वेदशास्त्रपुराणानि[6]
त्यक्त्वा तं मन्त्रनायकम् ॥ २९८ ॥

यः पठेदाशु मे[7] प्रीत्या
सायुज्यं लभते प्रिये ।
प्राणलिङ्गस्य सांनिध्ये
पाठयेत् तत्त्वपारगः ॥ २९९ ॥

---

1 सर्वे–घ.च
2 दिवमार्धे–घ. च
3 मे–क. ख. ग
4 पञ्चसप्तनवापि वा–घ.च.
5 मे–घ. च
6 पुराणानां–च



येठा, पत्याशु मे–क. ख. ग

स याति मम सायुज्यं
रुद्रगन्धर्वसेवितम् ।
पादोदकक्रियाकाले
वीरागमसमन्वितम् ॥ ३०० ॥

कवचं वेदवेदाङ्ग-
वेदमूर्ध्नि प्रतिष्ठितम् ।
ये स्मरन्ति मम प्रीत्या
त एते प्रमथोत्तमाः ॥ ३०१ ॥

भवन्ति कृतपुण्येन
शृणु त्वं विभ्रमान्विते ।
मन्त्रलक्षणसम्पन्नाः
कुण्डलीधारधार्मिकाः ॥ ३०२ ॥

वीरमाहेश्वराः सर्वे
कवचं मन्त्रनायकम् ।
शिष्येभ्यो मे प्रिये गौरि[1]
उपदेशं जितेन्द्रियाः ॥ ३०३ ॥

कुर्वन्ति ते सुरश्रेष्ठाः
भवन्तीति न संशयः ।
आचार्यं ऋत्विजः सर्वान्
दीक्षाकर्ता जनान्वितः[3] ॥ ३०४ ॥

---

1 जातु घ. च
2 सुराः—च
3 दीक्षाकर्तॄन् जनान्वितम्—च

अदापयति वस्त्राणि
कार्तस्वरयुतान्यपि ।
नव[1]दर्भान्वितं गौरि
पञ्चपल्लववेष्टितम् ॥ ३०५ ॥

नवरत्नसमोपेतं
पादतोय[2]प्रपूरितम् ।
भूरुद्राणां जङ्गमानां[3]
प्रसादन्नन्नसेवितम् । ॥ ३०६ ॥

गुरोः कारुण्यभावेन
अर्चयेत् तत्त्वपारगः ।
दर्भ[4]कङ्कणसंयुक्तं[5]
प्राणलिङ्गप्रतिष्ठितम् ॥ ३०७ ॥

अष्टबन्धसमोपेतं
कन्थाबन्धनभावितम् ।
वीरव्रतान्वितं वीरं
वीरमाहेश्वरप्रियम्[6] ॥ ३०८ ॥

---

[1] कुश—क. ख. ग
[2] पादोदक—घ. च
[3] भूरुद्रजङ्गमानां च—क. ख. ग
[4] पर्ण—क. ख.
[5] संयुक्तः—च
[6] प्रतिष्ठितः—च
[7] प्रिये—घ. च

तं शिष्यं प्रतिजग्राह
आचार्योऽप्या[1]गमान्वितः ।
तस्य कर्णे महामन्त्रं
अपसव्ये वरानने ॥ ६०९ ॥

प्रणवब्रह्मसंयुक्तं
नादबिन्दुसमन्वितम् ।
अशेषवेदनिलयं
उपदेशं करोति सः ॥ ३१० ॥

मङ्गलध्वानसंयुक्त[2]-
नृत्तगीतसमन्वितः ।
शङ्खानककथोपेतः
स्तोत्रघोषसमन्वितः[3] ॥ ३११ ॥

गुरोर्वंशावलिध्यान-
वीरमाहेश्वरान्वितः ।
पादोदकप्रसादस्थः[4]
व्रतशीलसमन्वितः ॥ ३१२ ॥

तस्य शिष्यस्य तल्लिङ्गं[5]
नवकन्थासमन्वितम् ।

---

1 आचार्यो शा—क. आ. ग

2 सयुक्तः—घ. च

3 समाकुलः—च

प्रसादस्थ—क. ख. ग

5 लिङ्गतं—क. ख ग

आदाय दक्षिणकरे
प्रतिष्ठाप्य प्रियान्वितः ॥ ३१३ ॥

पुरातनचरित्रार्थे[1]
मन्त्रतोयेन हे प्रिये !
अभिषिच्य मम प्रीत्या
षट्स्थलब्रह्मिणां प्रियम् ॥ ३१ ॥

भूपावनकरं दिव्यं[2]
प्रसादं रुद्रकांक्षितम्
दत्त्वा ये[3] षोडशैर्दिव्यैः
उपचारैः सुभक्तितः[4] ॥ ३१५ ॥

शिवसूत्रेण तां कन्थां[5]
बद्ध्वा भावगुणान्वितः ।
तस्य शिष्यस्य हृन्मध्ये
देवदेवं सदाशिवम् ॥ ३१६ ॥

शक्तिगोलकसंयुक्तं
खण्डखण्डेन्दुशेखरम् ।

---

1 चरित्राद्य—क. ख. ग

2 तीर्थं—च

3 तु—च

4 समचंच—च

5 तं कन्थं—क. ख .ग.

अखण्डपरशुं गौरि !
कोटिसूर्यसमप्रभम् ॥ ३१७ ॥

ब्रह्माण्डसूत्रगर्भस्थं
प्राणलिङ्गमिति स्मृतम्[1] ।
बबन्ध यो गुरुश्रेष्ठः
स भवेदाशु मे प्रियः[2] ॥ ३१८ ॥

प्रमादाद्वा अप्रमाद्वापि
लिङ्गे[3] भिन्न गते सति ।
तव देहं विसृज्याशु
व्रते भङ्गं गते सति ॥ ३१९ ॥

तथा देहं विसृज्याशु[4]
ह्यपदेशं[5] करोति यः ।
स एव मम भक्तो हि
प्राणलिङ्गव्रतान्विते[6] ॥ ३२० ॥

---

[1] स्मृतः–क. ख. ग

[2] सभवत्याशु, हे प्रिये–क. ख. ग

[3] भङ्गे–घ, च

[4] विसृज्येति–ध. च

उपदेश–क. ख. ग

[6] इतः परं च.पुस्तके
निरादारलिङ्गवाह्याः
यत्र तत्र गता मृतिम् ।
तत्र तत्र शिवः स्थित्वा भक्षयते व हे द्विजाः ॥
इत्यधिकं दृश्यते ।

देवदेव जगन्नाथ !
गोलकोत्क्रमणं[1] यदि ।
प्राणलिङ्गे गते देव !
किं करोति गुरुः शिवः[2] ॥ ३२१ ॥

सज्जायां[3] बन्धनं कृत्वा
पूर्ववत् धारयेत् सुधीः ।
भक्तिभावेन यद्देहं
त्यक्त्वा जङ्गमसन्निधौ ॥ ३२२ ॥

स याति रौरवं घोरं
यावच्चन्द्रदिवाकरौ ।
गोलकोत्क्रमणं[4] लिङ्गं[5]
दृष्ट्वा पटलवर्जितम् ॥ ३२३ ॥

अभिन्नशक्तिविवरं
शोधयित्वा पुनः पुनः ।
अष्टबन्धनभावेन
पूर्ववत् धारयेत् सुधीः ॥ ३२४ ॥

---

1 कोत्क्पण–च
2 शिव–क. ख. ग
3 सज्जया–क. ख. ग
4 क्पणं–च
5 लिङ्ग–क. ख. ग.

अणुमात्रं[1] शक्तिमध्ये
पटलं दधते[2] सति !
देहं त्यक्त्वा मम प्रीत्या
योऽसौ यतिकुलोद्भवः ॥ ३२५ ॥

स याति मम सायुज्यं
नीलोत्पलसमप्रभे !
गोलके केशमात्रस्थ
पटलं[3] दधते[4] सति ॥ ३२६ ॥

स तु[5] देहं प्रिये गौरि[6]
त्यजेत् तत्त्वार्थपारगः ।
शक्तिगोलकयोर्मध्ये
तिलार्धे[7] पटलं गते ॥ ३२७ ॥

देहं त्यक्त्वा मम प्रीत्या
योऽसौ प्रमथनायकः ।
भवेत् तत्त्वार्थसम्पन्नः[8]
स याति मम मन्दिरम् ॥ ३२८ ॥

---

1 अनुमात्रं–च
2 दधति–क. ख, ग
3 मात्रस्थे पटले–च
4 दधति–क. ख. ग
5 तस्य–क. ख. ग
6 मम प्रीत्या–घ. च
7 तिलार्धं–क. ख. ग
8 सम्पन्न–च

पीठमध्ये तिलमात्रं
पटलं दधते[1] सति ।
देहं विसृज्य मे प्रीत्या
यो नो[2] वेदान्तपारगः ॥ ३२९ ॥

स भवेत् तेन[3] भावेन
लभते[4] मम मन्दिरम् ।
पीठाद्दलं ततो[5] लिङ्गं
दृष्ट्वाऽऽगमविवर्जितम्[6] ॥ ३३० ॥

यो जनो भक्तिभावेन
देहं तत्त्वसमन्वितम् ।
त्यजेदसौ महाघोरं
प्रेतराजस्य मन्दिरम् ॥ ३३१ ॥

विण्मूत्रविवरोपेतं
वज्रकीटक[7] वेष्टितम् ।
स याति रौरवं घोरं
यावच्चन्द्रदिवाकरौ ॥ ३३२ ॥

---

1 दधति क. ख. ग
2 न–क. ख. ग
3 केन–च
4 लभ्यते–क.
5 पीठाद्दलं ततं–घ. च
6 विवर्जितः–क. ख. ग
7 कंटक–क. ख. ग. कीलक–च

गोलके रश्मिमात्रस्थं
पटलं दधते[1] सति ।
पञ्चत्वमुद्वहन्तं मे
दूताः ब्रह्माण्डखण्डिताः- ॥ ३३३॥

हेरम्बस्कन्दवीरेश-
शिशुमारपुरःसराः[2] ।
विमानं कोटिसूर्याभं
रुद्रकन्यावृतं परम् ॥ ३३४ ॥

अष्टावरणसंयुक्तं
भैरवाष्टकवेष्टितम् ।
विष्णुब्रह्मेन्द्रदिक्पाल-
सेवितं रत्नवेष्टितम् ॥ ३३५ ॥

सप्तमातृलसत्ताल[3]-
रागमूर्छासमन्वितम् ।
स्वरसन्दोह[4]सन्तान-
भङ्गिनाटचोपशोभितम्[5] ॥ ३३६ ॥

नन्दिचण्डिद्वारयुतं
रेणुकेन समन्वितम् ।

---

1 दधाति–क.ख. ग

2 पुरस्कृताः–घ. च

3 सप्तमतुलसत्तूल–घ. च

4 सन्धान–घ. च

5 सेवितं–क. ख

आरुह्य सहसा गौरि
तं व्रजन्ति वरानने[1] ॥ ३३७ ॥

शक्तिपीठोत्थितं[2] लिङ्गं
अखण्डं गोलकं यदि ।
दृष्ट्वा भाववशात् गौरि
पञ्चत्वं लभते[3] नरः[4] ॥ ३३८ ॥

स[5] मूढ इति ये दूताः
प्रेतराजस्य सन्निधौ ।
आहुस्तं मानुषं दूष्यं
आगमज्ञानवर्जितम् ॥ ३३९ ॥

मूढं नराधमं गौरि !
विगृह्य यमकिङ्कराः[6] ।
मुष्टिनाहत्य[7] पाशेन
बध्वा तं जडदेहिनम् ॥ ३४० ॥

प्रवेशयन्ति[8] मूत्रस्थं
विवरं कीटकान्वितम् ।

---

1 तं व्रजयन्ति वरानने—घ तं स्वजयन्ति मेपटम्—च
2 पीठत्थतं—क
पीठाद्गतं—घ. च
3 लभ्यते क. ख. ग
4 जनः—च
5 न—क. ख. ग
6 यमकिङ्करः—च
7 मुष्टिघातेन—क. ख.
मुष्टिनाघात्य—च
8 प्रवेशयति—च

शक्तिपृष्ठे मापमात्र[1]-
पटलं दधते[2] सति ! ॥ ३४१ ॥

दृष्ट्वा तत्पटलं कान्ते
अभिन्नमिति ये स्मृताः ।
प्रेतलिङ्गक्रियाचाराः[3]
प्रेतदीक्षासमन्विताः ॥ ३४२ ॥

ध्रुवं भवन्ति ते सर्वे
शृणु कान्ताजनोत्तमे !
शक्तिगोलकसंयुक्ते
प्राणलिङ्गे [3]क्रियान्विते ॥३४३ ॥

अभिषेकावितं तोयं
पानं ग[कृ]त्वा दिने दिने ।
तल्लिंङ्ग प्रेतराजानं
इत्याहुः प्रमथोत्तमाः ॥ ३४४ ॥

जलपानगतं लिंङ्ग
दृष्ट्वा माहेश्वरः सदा[6] ।

---

[1] मापमात्र–क. ख. ग
मासमात्रं–च
[2] दधति–क. ख. ग
[3] क्रियाचार–क. ख. ग
[4] लिङ्ग–घ. च
[6] तथा–घ च

धारयेत् प्रीतिपूर्वेण[1]
स याति यममन्दिरम् ॥ ३४५ ॥

जलपा... लिङ्ग
प्रेतलिङ्गमिति स्मरन्[2] ।
मम प्रीत्या यदा कायं
त्यक्त्वा यः सुरसेविते[3] ! ॥ ३४६ ॥

सः धीरः सत्त्विकः[4] श्रीमान्
वीराचारव्रतान्वितः ।
आगमज्ञो गुणनिधिः
गुरूणां[5] हे गुरुप्रिये ॥ ३४७ ॥

भवति ज्ञानभावेन
व्रजत्याशु ममान्तिकम् ।
वरदीक्षान्वि प्राण-
लिङ्ग साधनकारणम्[6] ॥ ३४८ ॥

शक्तिगोलकसंयुक्तं
प्राणलिङ्ग नराधमः

---

1 धारयेद्यः पूर्वप्रीत्या–घ. च
2 प्रिये–क. ख. ग
3 यो सुरसेवितः–क. ख. ग
य: सुरसेवितः–घ
4 स धीरो सात्त्विको–क. ख. ग
5 गुरूणां गुरुर्हे प्रिये–क. ख ग
6 लिङ्गं प्राणसाधन कारणम्–

न पूजयेत् सदा गौरि
रौरवं नरकं व्रजेत् ॥ ३४९ ॥

दृष्टे सूर्ये पुन[1]स्तस्य
प्राणलिङ्गस्य यो नरः ।
पूजां कुर्वन्ति सततं
ते यान्ति मम मन्दिरम् ॥ ३५० ॥

शिवदीक्षान्वितं श्रेष्ठं
प्राणलिङ्गं मनोहरम्
त्यक्त्वा देवालयोपेतं
शैवदीक्षाविवर्जितम्[2] ॥ ३५१ ॥

पादोदकेन रहितं
प्रसादब्रह्मवर्जितम् ।
अर्चयन्ति सदा प्रीत्या
ते यान्ति यममन्दिरम् ॥ ३५२ ॥

श्वानयोनिशतं गत्वा
चण्डालाः कोटिजन्मसु ।
भवन्ति कृतपुण्येन
व्रजन्ति वसुधातले ॥ ३५३ ॥

---

[1] धन- च

[2] समन्वितम्-च

वैष्णवाः तप्त[1]संस्काराः
ऊर्ध्वपुण्ड्रसमन्विताः ।
शिवसंस्कारविरताः[2]
पाञ्चरात्रागमप्रियाः ॥ ३५४ ॥

ईषणात्रयसंयुक्ता
विष्णुसेवापरायणाः ।
रतिक्रीडामनोभोग[3]-
रतिलाञ्छनकीटकाः ॥ ३५५ ॥

मदान्धाः तत्त्वविरताः
पञ्चसूतकवेष्टिताः ।
मिथ्यापुराणसंस्काराः
भक्तिवैराग्यवर्जिताः[4] ॥ ३५६ ॥

गूढपापान्विता दूष्याः[5]
नरसूकरजन्तवः ।
भवन्ति कृतपुण्येन
ध्रुवं गौरि वरानने[6] ॥ ३५७ ॥

---

[1] सप्त–च

[2] रेणवत–च
रविरहाः–क. ख. ग.

[3] भाग–क. ख. ग

[4] वेष्टिताः–च

[5] पापान्वितं दूष्ये–च

[6] धनाढ्या भुवि पार्वति–घ. च

शिवदीक्षान्वि ́ लिङ्ग
पाषाणमिति ये नरः ।
अज्ञानात् कामजाद्वाऽपि[1]
स्मृताः पापानलाश्रयाः ॥ ३५८ ॥

कोटीनि[2] ब्रह्महत्यानि
प्राप्नुवन्ति न संशयः ।
शिवदीक्षाकृतं धीरं
वीरमाहेश्वरप्रियम् ॥ ३५९ ॥

षट्स्थलब्रह्मराजानं
भूरुद्रं बुधसेवितम् ।
किञ्चिज्ज्ञमिति ये सर्वे
नरयोनिसमुद्भवाः ॥ ३६० ॥

स्मृतास्ते रौरवं घोरं
यावच्चन्द्रदिवाकरौ ।
वीरमाहेश्वराचारं[3]
वीरशीलसमन्वितम् ॥ ३६१ ॥

अष्टावरणसंयुक्त[4]-
मानसं मनुजाधिपम् ।

---

1 अज्ञानाद्वा कामादपि–घ
2 कोटयः–क. ख. ग
3 चार–क. ख. ग
4 संसक्त-क. ख. ग

प्रसादब्रह्मनिलयं
प्राणलिङ्गप्रपूजितम् ॥ ३६२ ॥

भूरुद्रजङ्गमं लोके
सर्वज्ञमिति ये स्मृताः ।
ते यान्ति मम सायुज्यं
नित्यानन्दं निरञ्जनम् ॥ ३६३ ॥

भूरुद्रं पावनं शान्तं
ब्रह्माण्डलयसाधनम् ।
मोक्षलक्ष्मीवधू[1]नाथं
इति ब्रह्मेन्द्रविष्णवः[2] ॥ ३६४ ॥

मम भक्त्या सदा गौरि
जातक्रोधविवर्जिताः ।
अपूजयन्ति सततं
वैष्णवः[3] किं करिष्यति ॥ ३६५ ॥

शिवदीक्षां विनाऽप्यस्य[4]
नास्ति लोकत्रयं परम् ।[5]
शिवदीक्षाप्रभावेन
शिवत्वं लभते नरः ॥ ३६६ ॥

---

1 वपु–चे
2 देवताः–क. ख. ग
3 वैष्णवाः–क. ख. ग
4 विनादन्य–क. ख. ग
5 प्रिये–क. ख. ग

मतङ्गपुत्रो मातङ्गः[1]
तं नरं[2] ज्ञनयोगिनम् ।
पश्य गौरि मम प्रीत्या
तृणीकृतपुरन्दरम्[3] ॥ ३६७ ॥

देवदेव जगन्नाथ
वीरमाहेश्वरव्रत ![4]
योगिनस्तस्य मत्प्रीत्या
मातङ्गस्य महात्मनः ॥ ३६८ ॥

इतिहासं महाश्रेष्ठं
वीरमाहेश्वरप्रियम् ।
वीरमाहेश्वराचारं[5]
वीरशैवप्रवर्तकम् ॥ ३६९ ॥

ब्रूहि कालहर[6] शम्भो
कथयामि कृपानिधे[7] ।

---

1 मतङ्गीपुत्रमातङ्ग–घ
,, ङ्ग–च
2 तं नरा–क. ख. ग
3 पुरन्दरः–घ
4 व्रतेः–च
5 चार–क. ख. ग
6 कालहरः–कः ख. ग
कालहे–च
7 शिवे शृणु–च

मेरोर्दक्षिणदिग्भागे
वाराहाङ्कुरसम्भवा[1] ॥ ३७० ॥

चलत्तरङ्गसङ्कीर्णा[2]
चक्रोच्छ्वासप्रवेष्टिता[3] ।
जलकुक्कुटसङ्घाता[4]
चक्रवाकोपशोभिता ॥ ३७१ ॥

पुण्यवृक्षसमाकीर्णा[5]
मलयानिल[6]वेष्टिता ।
जलव्यालसमासक्ता[7]
पद्मकल्हारमण्डिता ॥ ३७२ ॥

नीलोत्पलदलश्यामा[8]
तोयराशिविराजिता ।
पुलिनोरुधरा शुद्धा
पूर्वसागरगामिनी ॥ ३७३ ॥

---

1 वराहं कुरु सम्भवम्–च
2 सङ्कीर्ण–क. ख. ग
3 चक्रोच्वासनवेष्टिता–च
4 सङ्कीर्ण–क. ख. ग
5 कीर्ण–क ख. ग
6 मलमारुत–क. ख. ग
7 समाकीर्ण–क. ख.
8 श्याम–क.ख. ग

तु भद्रानदी गौरि !
अस्ति[1] पापहरा नृणाम् ।
तत्तीरे मुक्तिनिलयं
ब्रह्मविष्णुप्रपूजितम् ॥ ३७४ ॥

सिद्धगन्धर्वयक्षाढ्य[2]
यक्षराक्षसवेष्टितम् ।
नारदात्रि[3]भरद्वाज
वसिष्ठाश्रमवेष्टितम्[4] ॥ ३७५ ॥

पम्पासरोवरं गौरि
मुक्तिखण्डमिव प्रिये[5] !
रेजे[6] सदा रेणुकाद्यैः[6]
शिंशुमारादिभिर्युतम्[7] ॥ ३७६ ॥

मृगाधिपैश्चित्रकायैः
स्तब्ध[8]रोमैश्च खड्गिभिः ।

---

1 चास्ति—च
2 यक्षाद्य—क. ख. ग
3 नारदादि—च
4 संवृतम्—च
5 मिदं शृणु—च
6 रेक्षि—क. ख. ग
7 काद्य—क. ख. ग
8 विवर्जितम्—क. ख. ग
स्तब्धु—क. ख. ग

उष्ट्राश्वगजसंघैश्च
भल्लूकैर्वानरैश्शुभैः[1] ॥ ३७७ ॥

कृष्णसारमृगैर्दिव्यैः
लुलायैर्वनराजिभिः[2] ।
शुकैः कपोतैर्व्यजितैः[3]
रथाङ्गैः बकबर्हिणैः[4] ॥ ३७८ ॥

बम्भरैर्गरुडैः श्येनैः
कङ्ककारण्डवायसैः[5] ।
चषकैः राजहंसैश्च[6]
टिट्टिभैः शकटैरपि[7] ॥ ३७९ ॥

तैत्तिर्यैर्भाटजैः[8] स्फोटैः
मक्षिकैः वन[9]मक्षिकैः ।
चम्पकैः पिचुमन्दैश्च
तालहिन्तालजालकैः ॥ ३८० ॥

---

1 वांसैर्वृकैः–च
2 कृष्णसारैर्मृगैर्जैरे
गंवयैरेलकैः शशैः ।–च
3 वैचित्र्यैः–क. ख ग
4 राजिभिः–क. ख. ग
5 लक्ष्मणैः शुभलक्षणैः–क. ख. ग
6 चषकैश्चकोरैर्हंसैः–च
7 तित्तिकश्च विराजितम्–क. ख. ग
8 भोटजैः–च
9 धु–च

तमालैः[1] बिल्वजम्बीरैः
कपित्थकदलीवटैः ।
सालैरशोकैर्बदरैः
मल्लिकामाधवीबकैः[2] ॥ ३८१ ॥

दाडिमैः सप्तपर्णैश्च
किंशुकैः ब्रह्मदारुभिः[3] ।
रुद्राक्षैः पनसैर्वंशैः
वेष्टितं ब्रह्मसेवितम्[4] ॥ ३८२ ॥

तस्य तीरे[5] व्योमचुम्बि-
गण्डशैलसमन्वितः[6]
शैलराजो[7] मतङ्गाद्रिः[7]
नानधातुसमन्वितः[8] ॥ ३८३ ॥

भुवः स्तनमिव श्यामः
रत्नकूर्पास[9]वेष्टितः ।

---

1 तमाल–च
2 माधवान्वितैः–च
3 मेडिभिः–च
4 भद्राक्षैर्ब्रह्मभिर्युतम्–च
5 स्थिरे–च
6 समन्विताः–च
7 राजा–च
8 मतङ्गादिः–क. ख. ग
9 समाकुलः–च
10 कुसस–च

तस्याग्रे दुर्घटे दुर्गं[1]
विश्वकर्मविनिर्मितम्[2] ॥ ३८४ ॥

गन्धर्वराजनिर्भेद्यं
सुरदानवकांक्षितम् ।
मतङ्गऋषिसंयुक्तं[3]
वालखिल्यप्रपूजितम् ॥ ३८५ ॥

सप्तमातृनिवासाढ्यं[4]
अष्टभैरववेष्टितम् ।
भेताल[5]डाकिनीयुक्तं
मेरुतुल्यं सुविस्मितम् ॥ ३८६ ॥

वासं करोति मातङ्गः
ऋषीणां योगिनामपि ।
चिच्छेद द्रव्यवस्त्राणि
हरेर्वीर्य[6]प्रभावतः ॥ ३८७ ॥

मानुषाणां सहस्राणि
मातङ्गः सकिरातकः[7] ।

---

1 दुर्घटो दुर्गं–च
2 निर्मितः–च
3 समायुक्तः–च
4 अष्टमातृकतद्वासं–क. ख. ग
5 वेताल–च
6 हरेर्धीर–च
7 स मातङ्गो किरातकः–क. ख. ग

दिने दिने प्रिये गौरि
च्छेदयामास सन्ततम्[1] । ॥ ३८८ ॥

सूक्ष्मवस्त्राणि दिव्यानि
रत्नानि रचितान्यपि[2]
अटकानि[3] विचित्राणि
ताम्रपत्राणि भूतले ॥ ३८९ ॥

आहरेत् सर्वदा गौरि
मधुमांसबलान्वितः ।
गजवाजिरथाकीर्णान्
नृपान् चिच्छादयेत् सदा[4] ॥ ३९० ॥

द्विजान् वणिग्जनात् सर्वान्
शूद्रानव्याधसन्ततीन्[5] ।
विष्णुभक्तान् शिवभक्तांश्च[6]
मृत्युरेव न संशयः ॥ ३९१ ॥

मातङ्ग[7] विक्रमं श्रुत्वा
ब्रह्मविष्णुसुराधिपाः ।

---

1 सर्वतः—च
2 र जतान्यपि—च
3 आठकानि—क. ख. ग
5 यतिसमाकुलान्—च
4 शूद्रान् यादवसन्ततीन्—क. ख. ग
8 विशेषज्ञान्—क. ख. ग
8 मतङ्ग—क. ख. ग

पुराणि हे प्रिये गौरि !
दुर्गाणीव दिने दिने ॥ ३९२ ॥

ते चक्रुः सर्वदा लोकान्
छेदयामास मानवः ।
एतस्मिन्नन्तरे गौरि !
योगिराजो दृढव्रतः ॥ ३९३ ॥

शिवागमसमोपेतः
यशस्वी प्रमथाधिपः ।
मुक्तिबीजाङ्कुरतनुः
मूलमन्त्रबलान्वितः ॥ ३९४ ॥

वीरमाहेश्वराणां च
कवचं मन्त्रवेष्टितम् ।
सदाधारी[1] यतिपतिः
प्राणलिङ्गहृदि स्थितः ॥ ३९५ ॥

षट्स्थलब्रह्मसूत्रस्थः
ब्रह्म[2]शीलसमन्वितः ।
कापथं पादचारेण
गत्वा तन्नरदानवम् ॥ ३९६

किरातं प्राकृतं दृष्ट्वा
स्मितवक्त्रं[3] शुचिव्रतः ।

---

[1] सदाधार–च
[2] मन्त्रस्थः सर्व–च
[3] स्मितवक्त्रो–क. ख.ग

स भवेदाशु[1] से [2]गौरि
धत्ते[3] तद्विस्मयं प्रिये ३९७ ॥

स किरातोऽपि तं श्रेष्ठं
यतिं[4] ब्रह्मेन्द्रसेवितम् ।
दृष्ट्वा मुदं भाग्यनिधिं
धत्ते गौरि वरानने ॥ ३९८ ॥

योगिनस्तस्य निकटं
गत्वा वचनमब्रवीत् ।
हे गुरो[5] तव वस्त्राणि
रुद्राक्षाभरणान्यपि ॥ ३९९ ॥

कक्षपालान्वितान्याशु[6]
दत्त्वा मार्गं व्रज प्रभो !
तस्य तद्वचनं श्रुत्वा
रुद्रतुल्यपराक्रमः ॥ ४०० ॥

यतिराजं[7] नरं धीरं
प्राकृतं जडदेहिनम् ।

---

1 भवेत्याशु–क. ख. ग
2 हे–च
3 दत्ते–च
4 यति–च
5 हेगौरि !–क. ख. ग
6 न्यासीत्–क. ख. ग
7 यतिराजा–क. ख. ग

तापत्रयसमोपेतं
पापसंसारवेष्टितम् ॥ ४०१ ॥

तं मातङ्ग[1] प्रिये गौरि !
आह वेदान्तपारगः
किरात ! तव दारा वा
पुत्रो वा पुरुषाधम[2] ! ॥ ४०२ ॥

देहार्जितं मोहयुतं
पापं दहति सर्वदा[3] ।
इति त्वं शृणु पापिष्ठ ।
तव दाराः सुतः सुतः[4] ॥ ४०३ ॥

तस्य योगीश्वरस्यापि[5]
वाक्यं वीरागमान्वितम् ।
स विचार्य तथास्त्वाशु[6]
पूतिगन्धसमन्वितम्[7] ॥ ४०४ ॥

---

1 मतङ्ग--क ख. ग

2 धमः--च

3 पापिष्ठसुतसर्वदा--च

4 सुतौ सुत--क. ख. ग

5 इत आरभ्य 'सिंहमध्यां' इत्यन्तो भागः 'घ'पुस्तके-प्रथमपटले 'मशकीव सदाप्रियै' इत्येतदनन्तरं दृश्यते ।

6 तदात्वाशु--क. ख. ग
तथा चाशु--च

7 समन्विता--च

आश्रयं[1] वंशशिविरं
गोहतेन समन्वितम्[2] ।
दत्त्वा[3] कान्तां विलासानि[4]
नूपुरेण विराजिताम्[5] ॥ ४०५ ॥

चलत्कुण्डलगण्डाभां[6]
काञ्ची[7]दामोपशोभिताम् ।[8]
प्रोत्फुल्लपद्मनयनां[9]
स्वर्णकुम्भपयोधरीम्[10] ॥ ४०६ ॥

कचभारां नम्रगलां
कुचभारानतोदरीम् ।
स्वर्णरम्भासमानोरू[11]-
पादपद्मविराजिताम्[12] ॥ ४०७ ॥

---

1 अश्रेयं–च
2 समन्विता–च
3 गत्वा–च
4 विलासाङ्गीं–ब
कान्ताविलासाङ्गी–च
5 विराजिता–च
6 गण्डाभा–च
7 काञ्चि–क. ख. ग
8 शोभिता–च
9 नयना–च
10 पयोधराम्–घ पयोधरा–च
11 स्वर्णरम्भाम्वितोरुं तां–क. ख. ग
,, समानोरु–च
12 विराजिता–च

तिलपुष्पसमा[1]नासां
कम्बुग्रीवां कलान्विताम्[2] ।
[3]सिंहमध्यां नीलकेशीं[4]
कोमलाङ्गीं वराननाम्[5] ॥ ४०८ ॥

मत्तकाशीं[6] सुरस्त्रीणां
हसितां मदलालसाम्[7] ।
पक्वबिम्बाधरां[8] श्यामां[9]
ददर्श सहसा प्रिये ! ॥ ४०९ ॥

योगिनस्तस्य तद्वाक्यं
शुश्राव स नराधमः ।
कान्ते मयार्जितं[10]पापं
विभज्य त्वं गताऽसि[11]यत् ॥ ४१० ॥

---

1 तुला–क. ख. ग

2 कलान्विता–च

3 पद्यार्धमिदं घ.च. पुस्तकयोः न दृश्यते ।

4 नीलकेशां–(व्या)
नीलकेशी–च

5 वरानने–क. ख. ग

6 मत्तकाशी–च

7 हसिता मदलालसा–च

8 धरीं–क. ख. ग धरी–च

9 साम्यं–च

10 ममार्जितं–क. ख. ग



11 गतोऽसि–क. ख. ग

[1]इति तद्वचनं श्रुत्वा
रोषावेशसमन्विता।
पतिं किरातं जडिनं
प्रति चेत्याह[2] सा वधूः ॥ ४११ ॥

त्वयाऽर्जितमिदं पापं
त्वं भोक्ताऽसि नराधम !
कान्ताया वचनं[3] श्रुत्वा
तप्तायःपिण्डसंनिभः ॥ ४१२ ॥

स मातङ्गः चर्मयुतं[4]
शाणा[5]लीढासमन्वितम् ।
खड्गं करतले धृत्वा
धुन्वन् परमकार्मुकम् ॥ ४१३ ॥

नारीकण्ठं समुद्धृत्य
मुष्टिघातेन हे प्रिये ।
उर्वो[6]र्मध्यं जघानाशु
सा वधूरवनीतले ॥ ४१४ ॥

---

1 इतः पूर्वं—
तन्निरासाय दीक्षां तु
लभ्यैवाशु त्वया मया'
इति—घ. च. पुस्तकयोः दृश्यते ॥
2 इत्याह—क. ख. ग
3 इति कान्तावचः—घ. च
4 सृष्ट्वा—घ. च
5 शोणा—क. ख. ग
6 उरो—क. ख. ग
7 वधू क्ष—कः खः ग

पपात सहसा गौरि
दासीदास[1]परिष्कृता ।
कान्तायाः पातनं दृष्ट्वा
पादद्वन्द्वेन पीडितः[2] ॥ ४१५ ॥

स मातङ्गः[3] किरातोऽयं
शिबिरात्[4] क्रोधमानसः ।
निर्गत्य योगिनस्तस्य
निकटं ब्रह्मसेवितम् ॥ ४१६ ॥

गत्वा प्रदक्षिणं[5] कृत्वा
इदं वचनमब्रवीत् ।
हे गुरो वेदवेदाङ्ग-
वेद्य वेदार्थपारग ![6] ॥ ४१७ ॥

अशेषप्रमथाधीश[7]
प्राणलिङ्गप्रतिष्ठित !
तव कारुण्यभावेन
जीवन्मुक्तो भवाम्यहम् ॥ ४१८ ॥

---

1 जन–क. ख. ग
2 पादितः–घ. च
3 मतङ्गः–क. ख. ग
4 शिबिलात्–क. ख. ग
5 प्रणमनं–घ. च
6 पारगः–घ
7 प्रमथानाथ–क. ख. ग

तव दीक्षां महाश्रेष्ठां
वेदमूर्ध्नि प्रतिष्ठिताम् ।
मम दत्त्वा[1] व्रजत्वाशु
त्वामनुव्रजाम्यहम्[2] ॥ ४१९ ॥

किरातस्य वचः श्रुत्वा
दीप्तिज्ञानसमन्वितम् ।
शुश्राव योगी[3] धर्मात्मा
प्रत्युवाच किरातकम् ॥ ४२० ॥

बहुपातकसंयुक्तः
त्वं गतोऽसि किरात हे[4] ।
अनृतात् पातकादन्यत्[5]
नास्ति लोके जगत्त्रये ॥ ४२१ ॥

दारिद्र्यादात्मबन्धानां
कलहं जायते सदा ।
कलहात् कार्यनाशश्च[6]
वीर्यनाशो[7] दिने दिने ॥ ४२२ ॥

---

1 तत्त्वा—क. ख. ग
2 त्वमहं व्रज हे प्रिये—क. ख. ग
3 सुश्राव योगि—क. ख. ग
4 व ानने—क. ख. ग
5 नानृतात्पातकमन्यत्
6 नाशं च—क. ख. ग
7 नाशं—क. ख. ग

जायते मनुजानां च
  सर्वानर्थकरं परम् ।
अनृतं चात्म[1]हननं
  धत्ते वेदान्तपारगः[2] ॥ ४२३ ॥

इत्याह रेणुकस्तस्मै[3]
  शृणु त्वं ज्ञानसाधक !
अनृतं[4] त्वं त्यज प्रीत्या
  उपदेशं करोमि ते ॥ ४२४ ॥

तस्य तद्वचनं श्रुत्वा
  योगिनस्तस्य साधकः[5] ।
स मातङ्गो[6]ऽपि हे कान्ते
  अनृतं[7] जातिचेष्टितम्[8] ॥ ४२५ ॥

तत्याजाशु[9] प्रिये गौरि
  योगी वेदान्तपारगः ।[10]

---

1 आत्म–क. ख. ग
2 पारगः–च
3 रेणुकाः सर्वे–क. ख.
4 नानृतं–क. ख. ग
5 स्तत्त्वसाधकः–क. ख. ग
6 मतौ–क. ख. ग
7 नानृतं–क. ख. ग
8 वेष्टितम्–घ
9 त्यजेदाशु–क. ख. ग
10 योगिवेदान्तपारगः–क. ख. ग

दीक्षां माहेश्वरीं श्रेष्ठां
प्राणलिङ्गप्रतिष्ठिताम् ॥ ४२६ ॥

प्रसादब्रह्मसाराङ्गीं
पादतोय[1]क्रियान्विताम् ।
दत्त्वा तस्य किरातस्या-
प्यन्त[2]र्धानं व्रजत्यये[3] ॥ ४२७ ॥

तेन दीक्षाप्रभावेन
वीरमाहेश्वरस्य च ।
मातङ्गस्य[4] तदा कायं[5]
तप्तहाटकसंनिभम् ॥ ४२८ ॥

ब्रह्मविष्णुसुरेन्द्राद्याः[6]
दृष्ट्वा खे खेचराः प्रिये !
स्तोतुं कुर्वन्ति हे गौरि[7]
चक्रुः स्तोत्रं[8] सुविस्मितम् ॥ ४२९ ॥

---

1 तीर्थ–घ· च
2 रय अन्त–क, ख, ग
3 व्रजेत् प्रिये–क· ख· ग
4 मतङ्गस्य–क· ख· ग
5 भवस्का–घय· च
6 ब्रह्मरुद्रेन्द्रदिक्पालाः–क· ख· ग
ब्रह्मविष्णुहरेन्द्राद्याः–च
स्तोतुमुद्यक्तमनसः–घ· च
7 स्तोतु–च

सर्व[1]वेदान्तवेद्याय
मातङ्गाय नमो नमः[2]
शिवदीक्षाप्रयुक्ताय
सर्वज्ञाय नमो नमः[3] ॥ ४३० ॥

पापारण्यकुठाराय
परमाद्वैतसाक्षिणे ।
पञ्चाणवत्याजमान-
परमाङ्गाय ते नमः ॥ ४३१ ॥

पञ्चसूतकविध्वंस
पञ्चप्रेतासनाय ते ।
नमो नमः सहस्राय[4]
वेदमस्तकवासिने ॥ ४३२ ॥

नमः खण्डेन्दुचूडाय[5]
त्रिणेत्राय नमो नमः ।
भूरुद्रजङ्गमप्रेमात्
आत्म[6]साधनसाधवे ॥ ४३३ ॥

---

1 नमो–घ. च
2 महात्मने–घ. च
3 गणाय ते–घ. च
4 सहसाक्षाय–च
5 जूटाय–घ. ज
6 प्रेमानात्म–घ
प्रेमनात्म–च

आधारकुण्डलीधार-
कुण्डब्रह्माण्डधारिणे[1] ।
इति[2] स्तोत्रं सुरस्तोमाः
मातङ्गं प्रति मत्प्रियम्[3] ॥ ४३४ ॥

मुदा[4] कुर्वन्ति हे गौरि !
किं करिष्यन्ति किङ्कराः ।
प्रेतराजस्य निलयं[5]
मातङ्गस्य[6] महात्मनः ॥ ४३५ ॥

शून्यं[7] यथा यथा दीक्षा-[8]
प्रभावात्[9] तत्त्वलाघनात् ।
अभवत्[10] सर्वदा गौरि
वयं वक्तुं सदा प्रिये ॥ ४३६ ॥

नेश्महे वीरशैवानां
व्रतशीलफलोदयम् ।[11]

---

1 सकलब्रह्माण्डधारक–घ-च
2 एतत्–क. ख. ग
3 मतङ्ग मत्प्रियं शिवम्–क. ख. ग
4 प्रति–क. ख. ग
5 निलये–घ. च
6 मतङ्गस्य–क.ख. ग
7 शून्यो–च
8 गौरि–क. ख. ग
9 प्रभावः–क. ख. ग
10 अकारि–क. ख. ग
11 व्रतशीलोदयफलम्–क. ख.ग

गणयिष्यन्ति[1] के[2] लोके
ब्रह्मविष्ण्विन्द्रवायवः ॥ ४३७ ॥

वीरमाहेश्वराणां च
सर्वशीलसमन्विताम् ।
माहेश्वरीं महादीक्षां
प्राप्य दीक्षापरेऽहनि ॥ ४३८ ॥

गुरूणां भस्मपिण्डेन
विज्ञाप्याहूय भक्तितः[3] ।
वस्त्राण्याभरणान्याशु[4]
दत्त्वा सन्तोषयन्ति ये[5] ॥ ४३९॥

ते यान्ति मम सायुज्यं
सत्यं सत्यं[6] वदाम्यहम् ।
भिक्षां प्रदेहि[7] मे मातः
शिवदीक्षासमन्विते ॥ ४४० ॥

मां पुत्रं विद्धि निर्मायें[8]
इति यत् तत्तु साम्प्रतम् ।

---

1 गणा इष्यन्कि–त ख. ग.
2 ते–च
3 आहूय च पुनः पुनः–क. ख. ग
4 न्येव–घ. च
5 तुष्यन्ति ये जनाः–क. ख. ग
6 गौरि–घ. च
7 तुदेहि–घ. च
8 मांमायाकलातीते
इति यत्तदसाम्प्रतम्-क. ख. ग

वीरमाहेश्वरादारात्
पर्जन्यः तृप्तिमेष्यति[1] ॥ ४४१ ॥

पर्जन्यादन्नमुद्भूत[2]
इति यत्तदसाम्प्रतम्
वीरमाहेश्वराहारात्
सर्वं सिद्ध्यति कांक्षिणः[3] ॥ ४४२ ॥

जगतामधीनं वाक्यं
वहन्ति[4] प्रमथाधिपाः ।
सत्यं सत्यं पुनस्सत्यं[5]
इत्याहुर्गणनायकाः ॥ ४४३ ॥

वेदागमानां वेद्यस्थं
दीक्षाकाले[6] वरानने
द्रष्टुं ब्रह्मेन्द्रदिक्पालाः
कांक्षन्ति गगनान्तरे ॥ ४४४ ॥

---

8 विरमाहेश्वराद्भोरि
पर्जन्या द्वन्नसम्भवम्–क. ख. ग
1 न्नात्पर्जन्यसम्भूतं–क. ख. ग
2 वीरमाहेश्वरत्सर्वं
जगतां जयकांक्षिणः–क. ख. ग
3 अधीनमिति यद्वाक्यं वहन्तः–क. ख. ग
4 गौरिसत्यं–घ. च
1 कालं–क. ख, ग

वीरमाहेश्वराणां च
दीक्षायाःकामिनि प्रिये[1] !
कन्या गोकोटिदानानि
कलां नार्हन्ति षोडशीम् ॥ ४४५ ॥

गजतुरगसहस्ररत्नसंवेष्टितायाः
कृतक[2]जनपवित्रं गोतुलार[3]त्नगर्भम् ।
जलधिकृतजनानां वेष्टितं मेरुसारं
खगकुलकुलकूट[4] पश्य दीक्षासमेतम् ॥ ४४६॥

अविद्यायोगनिर्मुक्त
ज्ञानसाधनहेतुजम्[5] ।
दीक्षारम्भस्वरूपं च
प्रपेदे योगिसत्तमः ॥ ४४७ ॥

स योगी[6] शुद्धशैवं च
त्यक्त्वा माहेश्वरान्वितम् ।
वीरशैवं महाश्रेष्ठं
प्रपेदे ब्रह्मशोधकम् ॥ ४४८ ॥

---

[2] शृणु–क. ख. ग

[1] क्रतुक–च

[2] गोगुला–च

[3] कुलकोटिं–च

[4] हेतुकं– घ. च

[1] योगि–क. ख. ग

शिवः सत्यो जगन्मिथ्या
इति यः सर्वदाब्रवीत्[1] ।
स योगी योगिराट् श्रेष्ठः
जगदारम्भ[2]साधकः ॥ ४४९ ॥

शीलानां साधकीं दीक्षां
निदानां[3] योगिनां प्रिये ।
यः प्रपेदे तपो भावात्[4]
सर्वं त्यजति हे प्रिये[5] ॥ ४५० ॥

मुक्तिदात्री[6] विलासाङ्गी[7]
दीक्षा षट्स्थलब्रह्मिणाम्[8] ।
भक्तमाहेश्वराणां च[9]
शरणानां मनोहरा ॥ ४५१ ॥

या सा मनोहरा विद्या
राजते[10] स्वेच्छयाप्रि

---

1 ब्रुवेत्–क. ख. ग
2 द्वाहन–क. ख. ग
3 निधानां–घ. च
4 तपः साध्यात्–क. ख. ग
5 स सर्वां त्यजति क्रियाम्–घ. च
6 मुक्तिदाता–क. ख. ग
7 विलासाङ्गि–क. ख. ग
8 ब्रह्मणाम्–क. ख. ग
9 राद्यानां–घ. च
10 [illegible]–क. ख. ग

तां विद्यां योगिनः सर्वे
प्रसादब्राह्मिणो ययुः[1] ॥ ४५२ ॥

मोहैर्विचित्रैर्वादार्थैः
कलयामासुरद्रिजे[2] ।
संज्ञानं साधकं मुख्यं[3]
विज्ञानं तदनन्तरम् ॥ ४५३ ॥

प्रज्ञानं प्रतिपद्‌ारभ्य[4]
यथा चन्द्रमसः प्रिये ।
स्वरदीक्षां शुद्धदीक्षां
शैवदीक्षां मनोहरीम् ॥ ४५४ ॥

ब्रह्मेन्द्ररुद्रगन्धर्वाः
दधते[5]ब्रह्मवर्जिताः ।
दीक्षणां[6] वेदतत्त्वानां
शिखारूपां मनोरमाम्[7] ॥ ४५५ ॥

वीरमाहेश्वरीं[8] दीक्षां
रेणुकाद्याः पुरातनाः ।

---

1 ब्रह्मणः प्रिये–क. ख. ग.
2 मास पार्वति–क. ख. ग
3 गौरि–घ
4 प्रतितारभ्य–च
5 दधति–क. ख. ग
6 दीक्षानां–क. ख
नोहराम्–घ. च
श्वरां–च

दधते[1] ज्ञानभावेन
एते श्रेष्ठा भवन्ति ये[2] ॥ ४५६ ॥

देवदेव जगन्नाथ
व्योमकेश सदाशिव ।
दीक्षाचतुष्टयं ब्रूहि
कृपया नु[3] मम प्रभो ॥ ४५७ ॥

प्रेतलिङ्गार्चनरतिः[4]
विप्राणां ज्ञानवर्जिता ।
या सा प्रेतासनादीक्षा
स्वरदीक्षा भवेत्प्रिये[5] ॥ ४५८ ॥

आवहनं मन्त्रयुक्तं
प्रेतलिङ्गविसर्जनम् ।
तं नरं प्राकृतंदृष्टं
इत्याहुः प्रमथोत्तमाः ॥ ४५९ ॥

यज्ञोपवीतसंयुक्तं[6]
मौञ्जीदण्डधरं द्विजम् ।
गोपीचन्दनलिप्ताङ्गं
ऊर्ध्वपुण्ड्रसमन्वितम् ॥ ४६० ॥

---

1 दधति–क. ख. ग
2 भवन्ति ह–च
3 कथयामि–क. ख. ग
4 र्चनारीतिः–क. ख. ग
5 भवत्यये–घ. च
6 संयुक्त–क. ख. ग

स्वरदीक्षासमोपेतं
चण्डालं जड[1]देहिनम् ।
भूतात्मानं प्रिये गौरि
ताडयन्ति दिने दिने ॥ ४६१ ॥

किङ्कराः प्रेतराजस्य
शासितुं जगतां जनान्
स्वरदीक्षासमोपेतान्[2]
मन्त्रज्ञानविवर्जितान् ॥ ४६२ ॥

मायाविलप्रविष्टाङ्गान्
माधवध्यानवेष्टितान् ।
कर्मचण्डालसंस्कारान्
तप्तमुद्राङ्कितप्रियान् ॥ ४६३ ॥

वायसश्वानवृत्तिस्थान्[3]
रेजे भूतगणः सदा ।
सूकराणां[4] समाजेषु
स्वरदीक्षायुतं नरम्[5] ॥ ४६४ ॥

प्रदीपयन्ति हे गौरि
प्रेतराजस्य किङ्कराः ।

---

1 चण्ड—क. ख. ग
2 समोपेतं—च
3 पायसाद्विकिरान्नस्थान्—क. ख.
4 सुराणां च—च
5 युतान् नरान्—च

स्वरदीक्षानरं[1] लोके
तत्समुद्रासमन्वितम् ॥ ४६५ ॥

मृत्पुण्ड्रधारिणं गौरि[2]
न निन्दन्ति दिने दिने ।
ते यान्ति रौरवं घोरं
यावच्चन्द्रदिवाकरौ ॥ ४६६ ॥

पक्षिणां घूकश्चण्डालः
नृणां[3] स्वरसमन्वितः[4] ।
ऊर्ध्वपुण्ड्राङ्कितो दूष्यः[5]
वैष्णवो द्विज ईश्वरि[6] ॥ ४६७ ॥

चण्डाल इति ये सर्वे[7]
वालखिल्यपुरःसराः ।
मार्कण्डेयोदधीच्यत्रिः[8]
उपमन्युपुरः सराः- ॥ ४६८ ॥

आहुस्सदा तत्त्वहीनं
शुद्धाद्वैत[9]प्रवादिनम् ।

---

[1] स्वरदीक्षान् नरान्-च
[2] धारिणो ये तु-च
[3] घूकचण्डालनृणां-क. ख. ग
[4] समन्वित-क. ख. ग
[5] ङ्कित दूष्य-क. ख. ग
[6] वैष्णव त द्विज प्रिये-क. ख. ग
[7] सर्वज्ञाः-घ. च
[8] यद्धीचोऽत्रिः-घ.च
[9] शुद्धद्वैत-च

स्वरदीक्षायुतं विप्रं
चण्डालमिति पार्वति[1] ॥ ४६९ ॥

पश्य गौरि मम प्रीत्या
चलत्कुण्डलविभ्रमे
दीक्षाहीनजनैर्युक्तं
पुत्रदार[2]समन्वितम् ॥ ४७० ॥

वीरमाहेश्वरैः सर्वैः
त्याज्यं तं नरदानवम् ।
न धारयति हे[3] गौरि !
रसा[4]पर्वतवेष्टितम्[5] ॥ ४७१ ॥

कालकण्ठं कलामूर्ति-
र्भूरुद्रं जङ्गमं सदा ।
निन्दिता सा च या बुद्धिः
शुद्धदीक्षा भवेत् प्रिये[6] ॥ ४७२ ॥

शुद्धदीक्षान्वितं विप्रं
पञ्चसूतकसूचितम् ।

---

1 सर्वदा–क. ख. ग
2 पुत्रदारा–क. ख. ग
3 यति मां–घ
यति मां–च
4 रस–घ. च
5 वेष्टिता–क. ख. ग.
6 भवत्यये–घ. च

याग्दानक्रियोपेतं
मेषमांससुरार्चिनम्[1] ॥ ४७३ ॥

सवन[2]त्रय संयुक्तं
पञ्चयज्ञप्रवर्तकम् ।
षट्कर्मनिरतं दूष्यं
कपालोपरमा [वा] न्वितम् ॥ ४७४ ॥

प्रायश्चित्तक्रियोपेतं
प्राकृतं जडदेहिनम् ।
पतितं कर्मपाषण्डं
कर्मब्रह्मेतिवादिनम् ॥ ४७५ ॥

चण्डालमिति हे गौरि
पश्य त्व नरदानवम् ।
अवै [वे] हि तं नरं भूतं
इति माहेश्वरप्रियात् ॥ ४७६ ॥

देवदानवगन्धर्व-
यक्षसिद्धखगाः[3] सदा
तं नरं कर्मचण्डालं
इति गौरि वरानने[4] ॥ ४७७ ॥

---

1 क्रियान्वितम्–क· ख· ग
2 सवर–घ. च
3 खगोरगाः-च·
4 सर्वत्रपार्वति–च

ददर्श[1] सर्वदा लोके
कृतकृत्यं[2] नराधमम् ।
असौ द्विजः सदा लोके
भूरुद्रं पावनं गुरुम्[3] ॥ ४७८ ॥

निन्दयामासुः[4] तान् सर्वान्
शिवभक्ताः सुशीलकाः
न ताडयन्ति हे गौरि
त एते शुद्धदीक्षिताः[5] ॥ ४७९ ॥

भवन्ति निर्जले देशे
भूतप्रेतसमन्विते ।
चण्डालनिलयप्रान्ते
पूतिगन्धसमन्विते ॥ ४८० ॥

जायन्ते जन्तवः सर्वे
तान् जन्तून् शुद्धदीक्षितान्
अवेहि सर्वदा गौरि
सत्यं सत्यं वदाम्यहम् ॥ ४८१ ॥

शुद्धदीक्षामरं दूष्यं
इत्याहुः प्रमथेतराः ।

---

1 ददर्शुः–क. ख: ग
2 कृत्य–क. ख. ग
3 सदा सर्वदेवभूरुद्रंजङ्गमंशिवम्–च
4 निन्दयामासुः–क. ख. ग. घ

5 शुद्धदिशक्षयाः–क. ख. ग. ङ

शुद्धदीक्षायुतं विप्रं
क्रिमिवत् सर्वदाप्रिये ॥ ४८२ ॥

अवेहि सर्वदा कान्ते
चलत्कुण्डलवेष्टिते ।
विरुद्धं विश्वनिलय-
वैष्णवं वरदानवम् ॥ ४८३ ॥

कर्महीनं तपयुतं
कामदण्डसमन्वितम्[1]
किञ्चिज्ज्ञं कृपणं दीनं
शुद्धदीक्षासमन्वितम् ॥ ४८४ ॥

तं द्विजं[2] योगिनः सर्वे
दीक्षां कुर्वन्ति ये प्रिये[3]
मन्त्रहीनं नृणां कायं
मदमोहसमन्वितम् ॥ ४८५ ॥

धिक् धिक् वृथा मांसयुतं
इति ब्रह्मनृणीकृताः ।
इत्याहुः शार्वरीहीन-
शरच्चन्द्रमरीचिवत् ॥ ४८६ ॥

---

1 दण्डत्वचामिदन्-च
2 तद्विजं-क. ख. ग. झ
3 शिक्षां कुर्वन्ति ये प्रिये-क. ख.
दीक्षां कुर्वन्ति मे प्रिये-च

दीक्षाहीनंनृणां देहं
भस्मीकुर्वन्ति मानवाः ।
भूदानवानां यत्कार्यं[1]
वैष्णवानां वरानने ॥ ४८७ ॥

भेतालशाकिनीसङ्गो
हरत्याशु ध्रुवं प्रिये[2] ।
नृणां परमचण्डालाः
तप्तमुद्रासमन्विताः ॥ ४८८ ॥

मृत्पुण्ड्र[3]गन्धनिटिलाः[4]
भवन्ति भविनः प्रिये ।
वीरमाहेश्वराणां च
दीक्षाशीलसमन्विताः[5] ॥ ४८९ ॥

वैष्णवेभ्यः सुवस्त्राणि[6]
रत्नान्यपि धनान्यपि ।
दापयन्ति सदा प्रीत्या
ते यान्ति यममन्दिरम् ॥ ४९० ॥

---

1 च तथा—च

2 हरत्येषां तनु प्रिये ।—च

3 मृत्पिण्ड—क.

4 गोधिकोपेताः—क. ख. ग.झ

5 दीक्षां शीलसमन्विताम्—च



6 तेभ्यो भविभ्यो वस्त्राणि—च

तस्मात् सर्वप्रयत्नेन
वैष्णवान् वरदानवान्[1]
येन केनाप्युपायेन
ताडयेत् सर्वदा सुधीः ॥ ४९१ ॥

दग्धकीटस्य हे गौरि[2] !
वैष्णवस्य मुखं प्रिये !
ऊर्ध्वपुण्ड्रेण संयुक्तं
तप्तमुद्रासमन्वितम्[3] ॥ ४९२ ॥

पश्यन्ति मानवा नित्यं[4]
ते यान्ति यममन्दिरम् ।
वैष्णवस्य मुखं दृष्ट्वा
प्राणलिङ्गस्य मानवाः ॥ ४९३ ॥

नेच्छन्ति[5] सर्वदा गौरि !
ते यान्ति यममन्दिरम् ।
तस्याननं सदा लोके
दग्धकीटस्य हे प्रिये[6] ॥ ४९४ ॥

---

1 नरदानवान्–च
2 दग्धकीटकम्लेच्छस्य–च
3 मेण्ढ्रचर्म[मेढ्रचर्म] छेदकस्य क्षपणस्य निर्लिङ्गिनः–च
4 दृश्यन्ते मानवाः सर्वे–क. ख. ग. घ
5 तस्मात्तस्याननं लोके
नागलोके न दुर्मते ॥–च
6 येऽर्चयन्ति–च

वैष्णवस्य महाप्राज्ञाः[1]
प्रसाद् ब्रह्मसेविताः ।[2]
वीरमाहेश्वराः सर्वे
दग्धं कुर्वन्ति हे प्रिये[3] ॥ ४९५ ॥

दग्धकीटस्य तस्याङ्ग-
दर्शनं यद्दिनं [ने] भुवि[4] ।
तद्दिनं दुर्दिनं मन्ये
तत्र त्वं नेक्षसि[5] प्रिये ॥ ४९६ ॥

इति बोधं महाश्रेष्ठ[6]
गुरुर्वे[7]दान्तपारगः ।
नवदीक्षान्वितं शिष्यं
बोधयेत् सर्वदा[8] सुधीः[8] ॥ ४९७ ॥

सगुरुर्गुरूणां प्राज्ञः
शिवसूत्रसमन्वितः ।
भवेदह भ्रुवा[ब्रवी] म्याशु
शृणु त्वं सुभ्रु विभ्रमे ! ॥ ४९८ ॥

---

1 महाप्राज्ञः—च
2 सेवितः—च
3 वीरमाहेश्वरा वक्तुं
दग्धंपश्यन्ति नो प्रिये ॥
4 प्रिये—क. ख. ग. झ
5 न्यक्षसे—च
6 ईतिवाधां माहश्रेष्ठां—क. ख. ग. झ
7 गुरो-.च
8 सार्वदा—क. ख. ग. झ

यतीनां[1] दीक्षनिष्ठानां
प्राणलिङ्गधृतां सदा ।
प्रसादब्रह्मनिष्ठानां[2]
चक्रराज्ञां चरात्मनाम् ॥ ४९९ ॥

आधारकोशनिलयं
बोधाज्ञानं[3] मनोहरम् ।
शिवसायुज्यनिलयं[4]
पापक्षयकरं शुभम् ॥ ५०० ॥

भक्तिदं मुक्तिदं नृणां
विज्ञेयं वीर्यवर्धनम् ।
उद्वहन्तं महाश्रेष्ठं
ये वहेयुः सदा प्रिये ॥ ५०१ ॥

ते यान्ति मम सायुज्यं
सत्यं सत्यं वदाम्यहम् ।
विशुद्धं शुद्धदीक्षाकं
नरं मन्त्रविवर्जितम् ॥ ५०२ ॥

प्राकृतं प्रकृति[6]व्याप्तं
प्राणलिङ्गविवर्जितम् ।

---

1 यतिनां—झ
2 भावानां—च
3 रोधाज्ञानं—च
4 सद्नम्—च
5 भुक्तेदं भूमिपालानां—क. ख. ग
6 प्रकृतं—च

दग्धकायं[1] तमयुतं
विष्णुसंस्कारपूर्वकम् ॥ ५०३ ॥

तं दूषितं प्रेतगणैः
प्रमथैः प्राणलिङ्गिभिः ।
अशेषैः विबुधैः सर्वैः
रेणुकाद्यैः पुरातनैः ॥ ५०४ ॥

निषिद्धं[2] शाश्वतं लोके
वेदवेदाङ्गपारगाः
उद्घोषयन्ति सततं
दग्धकीटमिति स्मृताः ॥ ५०५ ॥

दग्धकीटं नरं गौरि !
भीमपातकवेष्टितम् ।
पञ्चसंस्कारनिरतं
पञ्चपातकवेष्टितम् ॥ ५०६ ॥

पापात्मानं[3] सदाश्रेष्ठाः
वीरमाहेश्वराः शुभाः ।
त्यजन्ति प्रेमया (?) लोके
मम सायुज्यकाङ्क्षया[4] ॥ ५०७ ॥

---

1 छिन्नकायं–घ·च

2 निषिध्य–क. ख. ग. झ

3 पापात्मनामिति–च

4 सायुज्यदायका–क. ख. ग. झ

भूरुद्र[1] जङ्गमान् भूमौ
ब्रह्मविष्णिव[2]न्द्रपूजितान् ।
निरञ्जनान् नित्यशुद्धान्[3]
निखिलागमवेष्टितान् ॥ ५०८ ॥

[4]विराड्रूपान् विश्वमूर्तीन्
विषयेन्द्रियभेदकान् ।
त्रिषष्टिशीलसम्पन्नान्
प्रमथाचारचारितान् ॥ ५०९ ॥

गुरु[5]पादोदकास्वादान्[6] ।
प्रसाद[7]ब्रह्मसेवितान् ।
षट्स्थलब्रह्मसर्वज्ञान्[8]
आत्मकोशप्रदीपकान् ॥ ५१० ॥

विश्वाधारान् विलासस्थान्
काषायवसनप्रियान् ।

---

1 भूरुद्रान्–च
2 ह्मापेन्द्रे–च
3 शुद्ध–च
4 विराडित्याद्यर्धपद्य चारितानि
त्यनन्तरं दृश्यते–च
5 गुरोः–च
श्र ष्टान्–क. ख. ग. झ
प्रमादं-च
8 षट्स्थल ब्रह्मिणां [illegible]–च

वीरमाहेश्वरान् वीरान्
विदुषो मन्त्रपारगान् ॥ ५११ ॥

आद्यन्तशून्यान् विश्वेषां[1]
ब्रह्मानन्दप्रदायकान् ।
विश्वाधिकान् मुनिवरान्
पादुकापादचारिणः[2] ॥ ५१२ ॥

ये भक्ताः परमप्रीत्या[3]
दीक्षाकाले वरानने[4] ।
वित्तशाठ्यविनिर्मुक्ताः
ते यान्ति मम सादरम्[5] ॥ ५१३ ॥

सायुज्यजन्मरहितं
मानातीतं सुखोद्भवम् ।
रुद्रकन्यासमोपेतं
रुद्रगान्धर्ववेष्टितम् ॥ ५१४ ॥

गान्धर्वैः दानवैःसिद्धैः
यक्षैर्गुह्यै[6]र्गरुडैः ।

---

[1] विश्वेशान्–च

[2] पादपातुकचारिणः–क. ख. ग. झ

[3] येऽर्चयन्ति परप्रीत्या–च

[4] काले तु शिष्टकाः–च

[5] पूजयामासुस्ते यांति मम प्रीत्या वरानने–क. ख. ग. झ

[6] गुहै–क. ख. ग

पन्नगैः ऋषिभिः सर्वैः
अभेद्यं नन्दिवेष्टितम् ॥ ५१४ ॥

चण्डिनाद्यसमोपेतं[1]
भृङ्गिहास्यसमन्वितम् ।
वेदानामागमानां च
मगधानां[2] मनोहरैः ॥ ५१५ ॥

स्वरैरुदात्तसंमिश्रैः
सप्तगानसमन्वितैः[3] ।
तालक्रिय[4]लयोपेतैः
किन्नरैर्वेष्टितं परम् ॥ ५१६ ॥

वीरमाहेश्वराणां च
दीक्षाकाले सुराधिपाः ।
विष्णुब्रह्मेन्द्रवायव्य[5]-
कुबेरशशिभानवः[6] ॥ ५१७ ॥

मम भक्त्या[7] सदा गौरि !
ध्यातुं कांक्षन्ति योगिनः[8] ।

---

1 समोपेत–क. ख. ग. झ

2 मागधिवः–क. ख. ग. झ

3 समाकुलैः–च

4 किल–च

5 ब्रह्मोपेन्द्रेन्द्रमरुतः च

6 भानवाः–क. ख. छ

7 भक्ताः–च

गिनम्–क. ख. ग घ. छ

भूरुद्रजङ्गमं श्रेष्ठं
प्राणलिङ्गाङ्गलिङ्गिनम् ॥ ५१८ ॥

वीरमाहेश्वराणां च
सभां ब्रह्मेन्द्रसेविताम् ।
सप्तमातृकानाढ्य[1]स्थां
मन्त्रन्यास[2]समन्विताम् ॥ ५१९ ॥

[3]ब्रह्मेन्द्रमौलिसङ्घट्ट
रत्नदीधितिपादुकाम्[4] ।
ऋग्यजुस्सामाथर्वा-
युर्वेदा[5]दिविष्टिताम् ॥ ५२० ॥

शिवात्मजीवतत्त्वानां
जडचैतन्यवर्जिताम् ।
पुरातनकथामाला
यामृतानन्दलहरीम् (?) ॥ ५२१ ॥

योगध्यानक्रियासक्त-
षट्स्थलब्रह्मवेष्टिताम् ।

---

1 सुनाढ्य–च

2 मातृन्यास-च

3 इतः परं "माहेश्वरान्विताम्"(P. 504)
इत्यन्तो भागः च–झ पुस्तकयोः दृश्यते ।

4 थर्वगन्धवायुर्वेदा–झ

5 पादुकाः–च

अनिर्वाच्यपराकार-
विश्वब्रह्मविलासिनीम् ॥ ५२२ ॥

ध्यानगम्यां जनानन्द-
मतिधातृधुरन्धराम् ।
स्वशोभा[1]धर्मनिलयां
स्वपूर्तिध्यानगर्भिताम् ॥ ५२३ ॥

अहं वा वर्णितु लोके
ब्रह्मादिक्पालसेवितः ।
त्वं वा सुरेन्द्र[2] दिक्पाल-
नारीसेवापदान्वितः ॥ ५२४ ॥

असमर्थोऽसि हे गौरि
नैरोकः [3]किं करिष्यति[4] ।
किङ्कराः सर्वदिक्पालाः
ब्रह्मविष्णुसमन्विताः ॥ ५२५ ॥

वीरमाहेश्वराणां च
प्रसादब्रह्मणां प्रिये !

---

[1] स्वगर्भ—च

[2] जहरि—च

[3] नेष्महे च

[4] करिष्यन्ति—च

[5] प्रसादब्रह्मचेतसाम्—च

कथये शृणु[1] हे कान्ते
इतिहासं सुविस्मितम् ॥ ५२६ ॥

सत्यज्ञानसदानन्द-
ज्ञानगम्यस्य भूपतेः ।
प्रत्यर्थिजनभूपाल-
मौलितेजस्स्वतेजसः[2] ॥ ५२७ ॥

सर्वशीलक्रियाचार-
वेष्टितस्य महात्मनः ।
षट्स्थलब्रह्मतत्त्वार्थ-
बोधकस्य दिने दिने ॥ ५२८ ॥

चतुः षष्टिकालविद्या
नारी नाट्योपशोभिताम् ।
मुक्तिसोपानसंयुक्त-
पदवीं जन्मवर्जिताम् ॥ ५२९ ॥

रुद्राक्षकण्ठवलयः
प्राणलिङ्गिप्रसादकः ।
शस्त्रास्त्रकोदण्डयुद्ध-
रणसन्धानवेष्टिनः ।
ब्रह्माण्डपुण्डरीकाण्ड-
प्रसूनास्त्रस्य मे प्रिये ॥ ५३० ॥

---

1 अथवा यदि–झ
2 प्रत्यर्थि सुर दिक्पाल मौलिं शूलस्य तेजसः–झ
3 अयं श्लोकः च. पुस्तके नास्ति

ब्रह्माण्डभाण्डमध्यस्थ-
कोटिसूर्यप्रभात्मनः ।
सत्येन्द्रस्य महीपाल-
सङ्घाः प्राकृतदेहिनः ॥ ५३१ ॥

दुद्रुवः शैवदीक्षाङ्ग
महद्भावं महोदयम् ।
सुरार्चितप्रभावात्म-
प्राणलिङ्गप्रतिष्ठितम् ॥ ५३२ ॥

एत मे ब्रूहि हे कान्ते
शृणु मन्त्रार्थपारगम् ।
पुराकृतयुगे गौरि !
त्रिकूटाख्यगिरौ शृणु ॥ ५३३ ॥

शृङ्गत्रितयरत्नाभ-
वेष्टितं वरुणान्वितम् ।
पुरमस्ति (?) पुण्यवति
सौधराजप्रभान्वितम् ॥ ५३४ ॥

समुद्रमध्ये सूर्यस्य
प्रतिबिम्बमिव प्रिये ।
उल्ललास चलच्चन्द्र-
मध्यतोयवृषान्वितम् ॥ ५३५ ॥

तां सज्जिवेदवेदाङ्ग-
पारगो ब्रह्मसेवितः ।

सत्येन्द्रो भूपतिः श्रीमान्
सत्यवादी जितेन्द्रियः ॥ ५३६ ॥

त्रिकालगुरुपादाब्ज-
सेवा लोलम्बलोचनः ।
रुद्राक्षकण्ठवलय-
प्राणलिङ्गिप्रसादिनः ॥ ५३७ ॥

भूरुद्रजङ्गमाचार-
चक्रवर्ती जनाधिपः ।
माहेश्वरक्रियारूप[1]-
भक्तपावनतन्त्रकः[2] ॥ ५३८ ॥

शासितुं सर्वदा लोके
क्षालितुं भक्तिसागरे ।
भूरुद्रजङ्गमानां च
पादपूजान्वितः प्रिये ॥ ५३९ ॥

बभूव भूमि[3]पातोरो- (?)
द्वितीय इव षण्मुखः ।
सत्येन्द्रस्य प्रिये गौरि
कान्ता स्त्रीणां ललामका ॥ ५४० ॥

---

1 रूपं— छ.
2 तन्तकम्—
3 भाषि—च

केवलाङ्गी सुशीला सा
भवते तस्य भूपतेः ।
तयोः पुत्रो गुणनिधिः
शिवशर्मा शुचिव्रतः ॥ ५४१ ॥

बभूव तस्य हे गौरि
सत्येन्द्रस्य नृपस्य[1] सः ।
देशिकेन्द्रो[2] गुरुश्रेष्ठः
रेणुको ब्रह्मसेवितः[3] ॥ ५४२ ॥

वीरमाहेश्वरीं दीक्षां
घण्टा[4]पञ्चकवेष्टिताम्[5] ।
अनादिवीरशैवानां
शीलाचारप्रवर्तकान् ॥ ५४३ ॥

बोधयामास हे गौरि !
सत्येन्द्रस्य महात्मनः ।
त सुतं मन्त्रदीक्षाङ्गं
वीरातिम्[6]निसेविताम् ॥
रेणुको भूपतेः शुद्धां
सभां माहेश्वरान्विताम् ॥ ५४४ ॥

---

1 सुतस्य—झ
2 देशिकेन्द्र—झ
3 सेवितम्—च
4 कलश—झ
5 वेष्टितम्—च
6 हराति—च

वर्णितुं न समर्थोऽपि[1]
भवती[2]त्याहुरास्तिकाः[3] ।
अशेषप्रमथाः सर्वे
तूष्णी[4]कृतपुरन्दराः ॥ ५४५ ॥

प्राणलिङ्गस्य तान् कन्या
नष्टबन्धनबन्धितान् ।
शक्तिगोलक[5] संस्थान-
चक्रषट्कप्रवर्तकान् ॥ ५४६ ॥

भूरुद्रजङ्गमाचार-
शीलक्रियाशुभान्वितान् ।
वीरमाहेश्वराणां च
कवचं भक्ताङ्गवेष्टितम्[6] ॥ ५४७ ॥

मन्त्राणां मातरं शान्ताम्
मातृकान्यास[7]वेष्टिताम् ।
षडक्षरीं सदालोके
सच्चिदानन्दसंयुताम् ॥ ५४८ ॥

---

1 समर्थोऽहं–च
2 भवाभी–च
3 सात्त्विकाः–क. ख. ग. झ
4 सर्वप्रणी–च
5 कोलक–क. ख. ग. घ. झ
6 वेष्टितान्–झ. देहवेष्टितम्–च
7 कन्यास–क. ख. ग

दत्त्वा माहेश्वरान् सर्वान्
स्तोतुं चक्रे मयान्वितः ।
भूरुद्रजङ्गमानां च
पादद्वन्द्वच्युतं रजः ॥ ५४९ ॥

ब्रह्मेन्द्रमौलिमध्यस्थं
जगत्पावनसाधकम् ।
जगतां धर्मसम्पत्ति-
लयवैन्दवगर्भितम् ॥ ५५० ॥

आदाय मन्त्रनिलयं
तत्परागं[1] शुभोदयम् ।
फाल[2]मध्ये प्रतिष्ठाप्य
राजते रेणुको गुरुः ॥ ५५१ ॥

तदारभ्य प्रिये गौरि !
धारयामि सदा परम् ।
वीरमाहेश्वराणां च
पादद्वन्द्वच्युतं रजः ॥ ५५२ ॥

तस्य प्रभावजनितं
फलं भाग्योदयं प्रिये ![3]

---

1 तत्त्वराजं–च

2 फल–च

3 शिवे–च

हेरम्बस्कन्दचण्डीश-
नन्दिभृङ्गिरिटादयः ॥ ५५३ ॥

न्ति[1] सर्वदा गौरि !
तव तेषां रजः शुभम् ।
कथयामि शृणु प्रीत्या
धृत्वा मूर्ध्नोत्तरालके[2] ॥ ५५४ ॥

सौभाग्यत्वं स्वरूपत्वं
लभ्यते[3] तेन हि प्रिये !
वीरमाहेश्वराणां च
पाद[4]द्वन्द्वच्युतेन च ॥ ५५५ ॥

रजसा यत्कृतं लोके
तत्कर्मफलदायकम् ।
लभन्ते[5] योगिनः सर्वे
सायुज्यं तत्प्रभावतः ॥ ५५६ ॥

वीरमाहेश्वराणां च
पादद्वन्द्वच्युतात् प्रिये ।

---

1 कांक्षन्ते–क. ख. ग

2 धृत्तोऽसि शुभलक्षणे–क. ख. ग

3 लभसि–च

4 पद–क. ख. ग



5 लभ्यन्ते–क. ख. ग

रजसः[1] सर्वदा कान्ते
जगल्लीलाक्षयं परम्[2] ॥ ५५७ ॥

बभूव तद्रजः सर्वाः
ब्रह्मविष्ण्विन्द्रदेवताः ।
दधते सत्क्रियारूपं[3]
महता कर्मणा प्रिये ॥ ५५८ ॥

भागं[4] स्वेषां सुरेन्द्राणां
आधिपत्यं महोदयम्
प्राप्नुवन्ति सुराः सर्वे
स्तोतुं को वा बुधोत्तमः ॥ ५५९ ॥

समर्थो हि प्रिये कान्ते
तत्र योगीश्वरान् प्रियान्[5] ।
वीरमाहेश्वरान् सर्वान्
शैवदीक्षाप्रवर्तकान् ॥ ५६० ॥

ध्यात्वा[6] निमज्जयन्त्याशु
त एते मुनिपुङ्गवाः ।
भवेयुः सर्वदा लोके
प्रमथानन्दमूर्तयः ॥ ५६१ ॥

---

1 रजः -च
2 पथम्—च
3 रूप—क. ख. ग
4 भोगं— च. झ
5 प्रभून्—च. झ
6 धृत्वा—च

रजसा तेन तत्सर्वं
जगदण्डक्षयं कृतम् ।
जगतां विलयं तेन
गत ब्रह्मेन्द्रवेष्टितम् ॥ ५६२ ॥

जगतामुदयं तेन
लभ्यते परमाणुना ।
इत्याहुः तार्किकाः सर्वे
इति यत्तदसाम्प्रतम् ॥ ५६३ ॥

रजसा तेन शुद्धेन
पादद्वन्द्वच्युतेन यत् ।
अनादिवीरशैवानां
भूरुद्राणां महात्मनाम् ॥ ५६४ ॥

योगीश्वराणां दीक्षाङ्ग[1]-
प्रसादब्रह्मधारिणाम् ।
ब्रह्माण्डकोटिमध्यस्थ-
जगतामुदयं प्रिये ॥ ५६५ ॥

इत्याहुः सात्त्विकाः शुद्धाः
प्रमथाः ब्रह्मसेविताः ।
तेषां मनोहरज्ञानं
माधवेन्द्रप्रपूजितम् ॥ ५६६ ॥

---



[1] दीक्षाङ्ग-च

यत्तत्त्वं वेदतनयः
सदा दधति हे प्रिये !
योगिनां मुक्तिजनकम्
राज्ञां वीर्यपितामहम् ॥ ५६७ ॥

भोगिनां भोगनिलयं
स्त्रीणां शीलगुणोदयम् ।
भक्तानां भक्तिदं ज्ञानं
उद्वहन्तं[1] सुरार्चितम् ॥ ५६८ ॥

वीरमाहेश्वराणां च
पादद्वन्द्वच्युतं रजः ।
एते नराधमा लोके
निन्दयन्ति निरन्तरम् ॥ ५६९ ॥

ते यान्ति रौरवं घोरं
पूतिगन्धसमन्वितम् ।
विण्मूत्रमध्ये विवरं
शतकोटिकुलान्विताः ॥ ५७० ॥

वीरमाहेश्वराणां च
पादद्वन्द्वच्युतं रजः ।
तद्ब्रह्मतत्त्वमित्याहुः
ते यान्ति ः मन्दिरम् ॥ ५७१ ॥

---

[1] ज्ञानमुद्योहित–च

वीरमाहेश्वराणां च
प्रसादाङ्गमहात्मनाम् ।
पादद्वन्द्वच्युतं दिव्य
रजो मेरुरभूदियम्[1] ॥ ५७२ ॥

वायोश्चलत्समुद्भूतं
आकाशस्यावकाचकम् ।
लग्नस्तेजोऽपां द्रविणं
धारणं च भुवः प्रिये[2] ।
कैलासमेरुसिंहाद्रि- (?)
हिम[3] शैलमहीधराः[4] ॥ ५७३ ॥

औन्नत्यं धातुनिलय
अचलत्वं महोदयम् ।
प्रभुत्वं[5] पर्वतानां च
वरत्वं वरयोगिनाम् ॥ ५७४ ॥

अभेद्यत्वं सुरेन्द्रैश्च
दानवैः देवतारिभिः ।

---

1 यद्भजः कणकाद्रियात्–क. ख. ग

2 वायोश्चलनसमुद्भूतस्पर्शनं च
दिने दिने–क. ख. ग. झ

3 ह्येवं–क. ख. ग. झ

4 महिभृताम्–च

5 प्रयत्व–क. ख. ग

कृतास्त्रशस्त्रसम्पन्नैः[1]
ब्रह्मविष्णुतृणीकृतैः[2] ॥ ५७५ ॥

मधुशुम्भनिशुम्भाद्यैः
हेतिप्रमुखराक्षसैः ।
रजसा तेन महता[3]
लभ्यन्ते नगदायकाः ॥ ५७६ ॥

वरुणस्यालयं लोके
रजसा लभ्यते प्रिये !
गभीरत्वं समुद्रत्वं
नदीनां सर्वदा प्रिये[4] ! ॥ ५७७ ॥

पतित्वं परमैश्वर्यं
निधित्वं रत्नसन्ततिम्[5]
दधानत्वं[6] गुरुत्वं च
श्वशुरत्वं सदा[7] प्रिये ॥ ५७८ ॥

---

1 मन्त्रास्त्रशस्त्रसम्पन्नैः—च
2 पुरन्दरैः—च
इतः परं च पुस्तके—
"रजसा लभ्यते गौरि महदैश्वर्यमुत्तमम्"
इत्यधिकः पाठःदृश्य
3 रजसा जङ्गमस्याङ्घ्रे
4 नदीनां च प्रवाहताः—च
5 प्रजापतित्वमैश्वर्यनिधित्वं
रत्नसन्ततिम्—च
6 दध्वे लभेत्—च
7 मम—च

विष्णोः शौर्योदयं दद्यात्[1]
प्राकृतस्य जडात्मनः ।
वीरमाहेश्वराणां च
पादद्वन्द्वच्युतं रजः । ॥ ५७९ ॥

हिमाद्रिः[2] सर्वदा लोके
गह्वरेषु शुचिव्रतः ।
स धत्ते तेन[3] रजसा
महतामवनीतले ॥ ५८० ॥

गुरुत्वं तव तातत्वं
रागिण्यकुटिलात्मनः[4] ।
मैनाकप्रमुखानां च
श्वशुरत्वं ममापि च[5] ॥ ५८१ ॥

शैलानां किन्नराणां च[6]
आवासत्वमियात् खलु[7] ।
रजताद्रिः सदालोके
मत्वा धत्ते रजोधृतः[8] ॥ ५८२ ॥

---

1 शौर्योदयांकस्य—क. ख. ग
2 हेमाद्रिः—क. ख. ग. ङ
3 स धत्ते न—च
4 रागिण्यकुटिलात्मनः—च
5 श्वशुरत्व ममापीच
आधिपत्य महोदयम्—क. ख. ग
6 ओषधीनां किन्नराणां—च
7 आवासे लभ्यते प्रिये!—क. ख. ग
8 [illegible]

वीरमाहेश्वराणां च
पादद्वन्द्वच्युतं शुभम्[1] ।
असौ तेन पवित्रेण
रजसा चाद्रिनायकः[2] ॥ ५८३ ॥

विश्वगर्भस्य ब्रह्माण्ड-
कोटिरोमधरस्य मे ।
आवासत्वं सदा गौरि
प्रमथानां महात्मनाम् ॥ ५८४ ॥

ब्रह्माण्डकोटिगर्भस्थ-
प्राणलिङ्गं हृदि धृताम् ।
अखण्डपरशुध्यान-
स्वच्छ[3]विग्रहधारिणाम् ॥ ५८५ ॥

जितमन्मथबाणानां[4]
यमिनां योगिनां प्रिये ।
किन्नराणां सुरेन्द्राणां
नगानां मेदिनीधृताम्[5] ॥ ५८६ ॥

लभते हे मयीशानि
सत सत्यं वदाम्यहम्[6] ।

---

1 च्युतेन च–च
2 रजताद्रिनायकः–क. ख. ग
3 स्वेच्छा–च
4 वैकार–क. ख. ग
5 तले–क.
6 लभते मे प्रिये गोरि चित्रं सत्य वरानने–क. ख. ग

त्रिकूटो भूधरो लोके
यद्रजो ब्रह्मधारि यत्[1] ॥ ५८७ ॥

शृङ्गेषु सर्वदा गौरि !
स धत्ते यो महीधरः ।
रजसा तेन शुद्धेन
त्रिकूटत्वं वरानने[2] ॥ ५८८ ॥

गतं कलिङ्गराजेन्द्र[3]-
पुत्रत्वं च[4] पुनः पुनः ।
लभते[5] साधु यत्पृष्टं
पादद्वन्द्वरजः शुभम् ॥ ५८९ ॥

पवित्रमघनाशं च
सत्यज्ञानैकसाधनम् ।
असुरेन्द्राः शिरोमध्ये
धारयन्ति[6] किमद्भुतम् ॥ ५९० ॥

सर्वेषां शम्भुयोगीनां[7]
गुरुद्राणां पदच्युतम् ।

---

1 यद्रजब्रह्मधारितत्–क. ख. ग

2 त्रिकूटतत्त्वमायमौ–च

3 धराकलिङ्गराजेन्द्रः–

4 स–च

5 लभ्यते–क. ग

6 धार्यतीति–क. ख. ग

7 योगिनां–च

यद्रजः सर्वदा लोके
विराण्मूर्तीव राजते[1] ॥ ५९१ ॥

तद्रजः सर्वदा लोके
योगिभिः ज्ञानसाधनैः ।
वालखिल्यैः सहस्रैश्चा-
प्युप[2]मन्युपुरस्सरैः ॥ ५९२ ॥

दीक्षाङ्गशैवसंस्कारैः
शतानन्दपुरूरवैः ।
सेव्यते स्वात्मविज्ञानं
आत्मसाधनपेशलात् ॥ ५९३ ॥

रजोदर्शनमारभ्य
ब्रह्मयोगीश्वराः सदा
वालखिल्यदधीच्यत्रि[3]-
शतानन्दपुरूरवाः[4] ॥ ५९४ ॥

सर्वकर्माणि संत्यज्य[5]
यद्रजः शाम्भवात्मकम्
वीरमाहेश्वराणां च
पादद्वन्द्वच्युतं शुभम्[6] ॥ ५९५ ॥

---

1 विराण्मूर्तिविराजिते—च
2 श्च उप—क. ख. ग
3 दधीचात्रि—च
4 पुरूरवैः च
5 कर्मान् परित्यज्य—घ. च
घ. पुस्तके एतावत्पर्यन्तमेव चतुर्थः पटलः समाप्तः कृत
इतःपरं च प्रथमपटलारम्भः दृश्यते ॥

आत्मानमिव कायेषु
धार्यते ज्ञानसाधनात्[1] ।।
दीक्षां विद्युत्प्रभारूपां
मोक्षपूजां[2] मनोहराम्[3] ॥ ५९६ ॥

घट[3]पञ्चकसंयुक्तां
शिवागमपरिष्कृताम् ।
पञ्चब्रह्मान्वितां विद्यां
पञ्चसूतकवर्जिताम्[4] ॥ ५९७ ॥

पुरातनाः पुण्योदयाः[5]
कांक्षन्ति प्रभवो बुधाः ।
तस्मात् सर्वप्रयत्नेन
दीक्षाहीनं नरं प्रिये ॥ ५९८ ॥

चतुर्वेदधरं विप्रं[6]
सर्वतत्त्वसमन्वितम् ।
सुराभाण्डोदकमिव
पश्य गौरि निरन्तरम्[7] ॥ ५९९ ॥

---

5 साधकान्-च
2 पुण्यां-क. ख. ग
4 मनोरमाम्-च
1 कलश-क. ख. ग
2 वर्जिताः-क. ख. ग
3 पुण्यनिधयः-क. ख. ग
4 वापि-च
5 वरानने-क. ख. ग

दीक्षाविहीनं द्विजनायकं शिवे !
वेदाङ्गसंस्कारपलित[1] कायम् ।
प्रेतात्मसन्धानसुरार्चितं नरं
त्वं पश्य लोके सुरबिन्दुवद्यथा[2] ॥ ६०० ॥

---

1 परि–च
2 तदा–च

इति श्रीवीरागमे वीरशैवदीक्षा
स्वरूपपादरेणवर्णनं नाम
चतुर्थः पटलः

———O———

## वीरागमोत्तरप्रथमभागगतानां श्लोकानां
## अकारद्यानुक्रमणिका

| श्लोकानामादिः | पुटसंख्या | श्लोकसंख्या |
|---|---|---|
| कश्यपात्रि | 147 | 181 |
| काङ्क्षन्ति सर्वदा | 309 | 554 |
| कान्ताजनानां | 243 | 291 |
| कामत्यागं | 172 | 21 |
| कार्तस्वरान्वितं | 203 | 135 |
| कार्तिके श्रवणे | 170 | [illegible] |
| कालकण्ठं | 289 | 47[illegible] |
| कालकर्मक्रिया | 184 | 55 |
| कालः शिवः | 158 | 223 |
| कालाधीनं | 160 | 234 |
| काश्यपात्रि | 58 | 38 |
| कास्यांश्च पित्तलान् | 186 | 64 |
| किङ्कराः | 287 | 46 |
| किमुपेक्ष्यसि | 213 | 175 |
| किरातं प्राकृतं | 269 | 397 |
| किरातस्य वचः | 276 | 420 |
| किरातो मृगया | 213 | 176 |
| कुङ्कुमागुरु | 205 | 144 |
| कुजस्फोटं | 137 | 139 |
| कुजादिपञ्च | 93 | 178 |
| कुण्डलीकृत | 86 | 147 |
| कुण्डलीं ज्ञान | 32 | 122 |

| श्लोकानामादिः | पुटसंख्या | श्लोकसंख्या |
|---|---|---|
| तां कर्तरिं | 134 | 126 |
| तां दीक्षां मान | 226 | 224 |
| तान् दूतान् | 24 | 94 |
| तान् द्विजान् | 73 | 95 |
| ,, | 73 | 98 |
| तान् राक्षसान् | 22 | 85 |
| तां पुरीं पाल | 62 | 54 |
| ताम्रकुम्भान् | 186 | 65 |
| ता रेणुको मुनि | 95 | 185 |
| तां संजिवेद | 304 | 536 |
| तालुमूले भवे | 41 | 155 |
| तिमिरं जाय | 115 | 45 |
| तिलपुष्पसम | 273 | 408 |
| तिष्ठन्ति मम | 230 | 240 |
| ,, मे | 230 | 242 |
| तिष्यर्क्षे च | 110 | 22 |
| तुङ्गभद्रा नदी | 264 | 374 |
| तुभ्यं दास्यामि | 203 | 137 |
| तुलाग्रजम् | 153 | 206 |
| तुलायां तु | 123 | 81 |
| तृणीकुर्वन्ति | 51 | 9 |
| ते चक्रुः सर्वदा | 569 | 393 |
| तेन दीक्षाप्र | 278 | 428 |

| श्लोकानामादिः | पुटसंख्या | श्लोकसंख्या |
|---|---|---|
| निर्लेपकाय | 198 | 112 |
| निर्विकल्पं गुणा | 87 | 154 |
| निषिद्धं शास्त्र | 297 | 505 |
| नीलोत्पलदल | 263 | 373 |
| नृणां तत्त्ववि | 132 | 119 |
| नृणां भक्तिकरं | 234 | 257 |
| नृणां विपत्करं | 147 | 180 |
| ,, | 138 | 140 |
| नृपतिर्मणि | 95 | 186 |
| नृपं प्रतिदमो | 97 | 195 |
| नृपान् परग | 59 | 40 |
| नेच्छन्ति | 294 | 494 |
| नेश्महे वीर | 280 | 437 |
| नेश्महे हे | 83 | 138 |
| नैसर्गिकं | 108 | 14 |
| नैसर्गिकक्रिया | 182 | 47 |
| न्यासपञ्चक | 187 | 68 |
| **प** | | |
| पक्षिणां घूक | 288 | 467 |
| पञ्चकोशात्मक | 201 | 127 |
| पञ्चब्रह्मसमो | 80 | 126 |
| पञ्चब्रह्मैक | 204 | 138 |

| श्लोकानामादिः | पुटसंख्या | श्लोकसंख्या |
|---|---|---|
| पवित्रमधना | 317 | 590 |
| पश्य गौरि | 289 | 470 |
| पश्यन्ति जङ्गमाः | 89 | 159 |
| पश्यन्ति जीव | 13 | 49 |
| पश्यन्ति मानवाः | 294 | 493 |
| पाञ्चरात्रागमा | 176 | 25 |
| ,, | 30 | 113 |
| पातादौ निर्दय | 152 | 200 |
| पातालं मम | 242 | 2[illegible]4 |
| पातफलकं | 3 | 11 |
| पातु मे जग | 237 | 267 |
| पादाग्रे जङ्गमः | 235 | 260 |
| पादाग्रे वाक्पतिः | 232 | 249 |
| पादुकान्यस्त | 181 | 41 |
| पादमध्ये प्रति | 212 | 171 |
| पादोदकप्रभा | 193 | 93 |
| ,, | 221 | 206 |
| पादोदकेन | 258 | 352 |
| पापग्रहान्वि | 138 | 143 |
| पापात्मानं | 297 | 507 |
| पापारण्यकु | 279 | 431 |
| पायुं मे पातु | 235 | 263 |
| पावनाना पङ्क्ति | 83 | 135 |

| श्लोकानामादिः | पुटसंख्या | श्लोकसंख्या |
|---|---|---|
| भवन्ति कुत | 246 | 302 |
| ,, तैः | 223 | 213 |
| ,, नाद | 36 | 137 |
| भवन्ति निर्जले | 291 | 480 |
| ,, न्यास | 3 8 | 143 |
| ,, मम | 50 | 7 |
| ,, ,, | 39 | 149 |
| भवानि कृत | 127 | 97 |
| भस्मत्रिपुण्ड् | 80 | 125 |
| भस्मरेखां | 156 | 215 |
| भस्मीकरोति | 218 | 191 |
| भस्मीकुर्वन्ति | 78 | 118 |
| भ गंस्त्वेषां | 310 | 559 |
| भावतत्त्वंमनो | 19 | |
| भुक्तिप्रदंमु | 10 | 219 |
| भुवःस्तनमिव | 266 | 384 |
| भुपावनकरं | 249 | 315 |
| भूपुत्रे नाशनं | 128 | 101 |
| भूरुद्रजङ्गमे | 164 | 249 |
| भूरुद्रजङ्गमा | 151 | 195 |
| ,, | 150 | 193 |
| ,, | 212 | 17[illegible] |

| श्लोकानामादिः | पुटसँख्या | श्लोकसंख्या |
| --- | --- | --- |
| भूरु द्राणां | 231 | 245 |
| ,, | 53 | 17 |
| ,, | 60 | 44 |
| भूरुद्रान् जङ्ग | 157 | 221 |
| ,, | 52 | 16 |
| भेतालशाकिनी | 293 | 488 |
| भोगिनां भोग | 312 | 568 |
| भौमवारः | 113 | 34 |
| भ्रूमध्ये विश्व | 238 | 272 |

म

| श्लोकानामादिः | पुटसँख्या | श्लोकसंख्या |
| --- | --- | --- |
| मङ्गलध्वान | 248 | 311 |
| मणिभद्रो गुरुं | 105 | 1 |
| ,, महा | 47 | 177 |
| मतङ्गपुत्रो | 262 | 367 |
| मत्तकाशीं | 273 | 409 |
| मत्वा तत्कर्म | 136 | 133 |
| मदान्धाःतत्त्व | 259 | 356 |
| मदाष्टकविनि | 173 | 16 |
| मधुशुम्भनि | 314 | 576 |
| मनोज्ञानं | 117 | 55 |
| मनोहरं महा | 75 | 103 |

| कानामादिः | पुटसंख्या | श्लोकसंख्या |
|---|---|---|
| रुद्रकन्यासमा | 55 | 26 |
| ,, | 27 | 104 |
| रुद्रसूक्तेन | 99 | 202 |
| रुद्राक्षकाठ | 303 | 530 |
| ,, | 195 | 100 |
| ,, | 194 | 96 |
| रुद्राणि जगतां | 119 | 63 |
| रेणुकस्य यदा | 91 | 168 |
| रोगघ्नं | 242 | 286 |
| रौर्द्रक्षम् | 110 | 21 |
| रौरवं नरकं | 153 | 204 |
| **ल** | | |
| लभते होम | 316 | 587 |
| लभन्ते सर्वदा | 56 | 31 |
| लभ्यते तस्य | 214 | 178 |
| लयतक्षाग्नि | 209 | 162 |
| ललाटमध्ये | 31 | 117 |
| लिङ्गोद्भवं | 189 | 78 |
| लोकानां लोक | 82 | 134 |
| **व** | | |
| वक्त्रं मे पातु | 237 | 269 |

| श्लोकानामादिः | पुटसंख्या | श्लोकसंख्या |
|---|---|---|
| वीरमाहेश्व | 132 | 117 |
| ,, | 133 | 122 |
| ,, | 139 | 1 [illegible] 4 |
| ,, | 105 | 4 |
| ,, | 106 | 5 |
| ,, | 113 | 35 |
| ,, | 309 | 557 |
| ,, | 312 | 569 |
| ,, | 312 | 571 |
| ,, | 313 | 572 |
| ,, | 316 | 583 |
| ,, | 285 | 456 |
| ,, | 289 | 471 |
| ,, | 300 | 517 |
| ,, | 301 | 519 |
| ,, | 302 | 526 |
| ,, | 306 | 543 |
| ,, | 269 | 395 |
| ,, | 281 | 438 |
| ,, | 283 | 445 |
| ,, | 245 | 296 |
| ,, | 246 | 303 |
| ,, | 94 | 182 |

| श्लोकानामादिः | पुटसंख्या | श्लोकसंख्या |
|---|---|---|
| सप्तमातृल | 254 | 336 |
| सप्तव्यसन | 175 | 22 |
| सप्तसंस्थक्रि | 180 | 40 |
| सप्तसंस्थाप | 38 | 146 |
| स भवेत् तेन | 253 | 330 |
| स भवेन्मम | 222 | 209 |
| समर्थो भवति | | 158 |
| समर्थो हि प्रिये | 310 | 560 |
| समस्तसम्पत्स | 222 | 210 |
| स मातङ्ग | 274 | 413 |
| ,, | 275 | 149 |
| समुद्रमध्ये | 304 | 535 |
| समूढमिति | 255 | 339 |
| सम्पत्तार | 108 | 15 |
| सयाति मम | 244 | 295 |
| ,, | 246 | 300 |
| ,, | 252 | 326 |
| ,, | 169 | 270 |
| सयाति रौरवं | 251 | 323 |
| स योगी च | 283 | 448 |
| ,, | 42 | 159 |
| सरीसृपाणां | 77 | 111 |
| सरीसृपाः सदा | 233 | 253 |

इति वीरागमोत्तर-पटलचतुष्टय-
श्लोकानामकाराद्यनु-
क्रमणिका समाप्ता

